# रागविबोधः

## सटीकः

—⊶⊷—

श्रीगणेशाय नमः ।

दक्षिणे लक्ष्मणो यस्य वामे तु जनकात्मजा ॥
पुरतो मारुतिर्यस्य तं वंदे रघुनंदनम् ॥ १ ॥
आर्यासूनुसमानं प्रणम्यमानं धरासुरैः प्रवरैः ॥
झाम्पांबया तयालं मुद्गलमालंबदं कलये ॥ २ ॥
गुरुगणपतिविधिपुत्रीर्नत्वा निखिलकुलदेवताः स्तुत्वा ॥
कुरुते विवृतिं स्वकृतेः सकलकलकुलोद्भवस्तो(?ः सो)मः ॥ ३ ॥

अथ रागविबोधाभिधं निबंधं विधित्सुस्तत्प्रतिपाद्यरागमूलभूतश्रुतिस्वरादीनां निदानं नादं समासोक्त्या सूचयन् शिष्टाचारोपदिष्टमनिष्टनिवारकमिष्टदायकं स्वेष्टगुरुदेवतानमस्कारात्मकं मंगलमाचरत्यार्यानंदेत्यार्यया—

**आर्यानंदनिदानं गुरुं स्वराधाररागविषयमहम् ॥**

स्थानविशेषख्यातं गणपतिमतिसिद्धये वंदे ॥ १ ॥

गणपतिं गणानां समूहरूपेण ख्यातानां विघ्नानां पतिं नियंतारं देवं अहं वंदे प्रणमामि ॥ गणपतिशब्दो योगरूढः ॥ किमर्थं अतिसिद्धये अंतरापायसच्छब्दार्थस्फुरणाभ्यां पूज्या या सिद्धिः ग्रंथसमाप्तिस्तस्यै ॥ सामर्थ्यद्योतनाय ॥ विशेषणान्याह ॥ आर्यायाः पार्वत्याः आनंदस्तस्य निदानं आदिकारणं पुत्रत्वेन महिषासुरादिवधे विघ्नहरत्वेन वेत्यर्थः । तथा च स्मृतिः ॥ पार्वत्या महिषासुरप्रमथने सिद्धादिभिर्मुक्तये ध्यातः पंचशरेण विश्वजितये पायात् स नागानन इति ॥ अत एव गुरुं उत्कृष्टं ॥ तथा स्वः स्वर्ग आधारो येषां ते स्वराधारा देवास्तेषां यो रागः तत्कर्तृका अनुरक्तिः तस्याः विषयं गोचरं विघ्नाख्यतदरिवधात् तत्प्रेमपात्रमित्यर्थः ॥ तथा तिष्ठंति शब्दार्थौ येषु तानि स्थानानि ग्रंथाः तेषां ये विशेषाः श्रुतिपुराणादयः तेषु ख्यातं । तथा च गणानां त्वा गणपतिं हवामहे इत्यादिश्रुतयः वेदा विदंति न यथार्थतया भवंतमित्यादिशिवोक्त्यनुवादकस्कंदपुराणादिपुराणानि च ॥ यद्वा गणानां प्रमथानां यः पतिः दक्षिणामूर्तिः शिवस्तमहं वंदे ॥ कीदृशं आर्यानंदनिदानं ॥ पार्वत्याह्लादहेतुं तस्यास्तदासक्तत्वात् ॥ अथवा आर्याः श्रोत्रियाः मुनयः तेषामानंदहेतुं ॥ यतः गुरुं तेषां ज्ञानोपदेष्टारं ॥ तथा स्वराधाररागविषयं ॥ स्वः स्वर्गः तेन तद्गता देवा लक्ष्यंते ॥ तेषां आधारं आश्रयं राति ददाति इति स्वराधारः कल्पवृक्षत्वादभीष्टप्रदः स चासौ अगः वृक्षो दिव्यवटश्च सविषयो यस्य तं तन्मूलनिवासिनमित्यर्थः ॥ तथा स्थानविशेषे आगमवर्णिते हिमाचलतटे ख्यातं तपसा प्रसिद्धं ॥ अतिसिद्धये इति पूर्ववत् ॥ तथा च दक्षिणामूर्तिध्याने शारदातिलकः ॥ हिमाचलतटे रम्ये इत्यादि ॥ स्मृत्यंतरं च ॥ वटविटपिसमीपे भूमिभागे निषण्णं सकलमुनिजनानां ज्ञानदातारमारात् ॥ त्रिभुवनगुरुमीशं दक्षिणामूर्तिदेवं जननमरणदुःखच्छेददक्षं नमामीति ॥ यद्वा गणस्य जीवसमूहस्य यः पतीति पतिः सत्त्वगुणेन रक्षकः तं विष्णुं वंदे ॥ कीदृशं अर्यः स्वामी आत्मैव भक्तिः सेव्यः येषां ते आर्याः आत्मभक्ताः तेषामानंदहेतुं ॥ तथा गुरुं श्रेष्ठं ॥ तथा

स्वरां सावित्रीं दधाति पुष्णातीति स्वराधः ब्रह्मा तस्य आरं अरिसमूहः मधुकैटभाख्यौ शंखासुरश्च ॥ तत्र रागो मात्सर्यं यस्य तं तद्घातकमिति यावत् ॥ तत्र मधुकैटभयोर्ब्रह्मवधोद्यतत्वात्तच्छत्रुत्वं शंखासुरस्य तु तत्प्रिय-वेदहारित्वात्तथात्वं ज्ञेयं ॥ स चासौ विषं उदकं समुद्ररूपं याति नारायण-रूपेण मत्स्यरूपेण च प्राप्नोतीति विषयः स च तं ॥ तथा तिष्ठत्यस्मिन्निति स्थानं वाहनं शयनं च तथाभूतौ च तौ यौ विशेषौ च विः पक्षी गरुडः शेषः अनंतश्च ताभ्यां ख्यातः प्रसिद्धस्तं ॥ अत्र गणपतिशब्दो विशेषण-बलाद्विष्णुवाचको ज्ञेयः ॥ अथवा आर्यान् अं दनिदानं इति पदच्छेदः ॥ अहं अं विष्णुं वंदे ॥ कीदृगहं ॥ आर्यैः सज्जनैः कृत्वा अनिति प्राणिति जीवतीति आर्यान् सज्जनानुगृहीत इत्यर्थः ॥ अथव आर्यान् अमति प्राप्नो-तीति आर्यान् सज्जनसेवीत्यर्थः ॥ विष्णोर्गुरुत्वं स्फुटयति ॥ कीदृशं अं दनि-दानं दः वह्निश्चासौ निदानं आदिकारणं च तादृशं तत्र गणपतिमित्यनेन जगतः पालकत्वं दमित्यनेन प्रलयानलतया जगत्संहारकत्वं निदानमित्यनेन तत्सर्जक-त्वं च सूचितं ॥ शेषं पूर्ववत् ॥ यद्वा गुरुं मुद्गलाख्यजनकं उपदेष्टारं च वंदे॥ कीदृशं आर्येषु सज्जनेषु आनंदं नयति प्रापयति तत् आनंदनि तादृशं दानं त्यागो यस्य तं पात्रे सन्मानपुरःसरत्यागिनमित्यर्थः ॥ तथा स्वराधाररागस्य पूर्ववत् देवकर्तृकानुरागस्य विषयाः महाः यज्ञाद्युत्सवा यस्य तं ॥ देवहृदयं-गमसांगयागाद्युत्सवकारिणमित्यर्थः ॥ तथा स्थानेन स्थित्या सद्व्यवहारेण विशेषख्यातं विशेषतः प्रसिद्धं ॥ अथवा स्थानेषु सादृश्येषु ये विशेषाः उत्कर्षाः देवतासादृश्यानीति यावत् तैः ख्यातं ॥ तथा च मत्पद्यं तुंदेनोंदुरु-यानमाननरुचा चंद्रं महेंद्रं श्रियोपेंद्रं पालनतो गिरा सुरगुरुं सर्वज्ञभावाच्छिवं ॥ वेदाधारतया विधिं विधितया भासां रविं भावयन्नेवं देवमयं गुरुं कुरु चिरं चित्ते स्थिरं मुद्गलमिति ॥ तथा गणानां जनसमूहानां पतिं पातारं बहुविधप-रिवारपालिनमित्यर्थः । अतिसिद्धय इति पूर्ववदेव ॥ इति प्रस्तुतवाच्यपक्षे तत्प्रशंसां करोमीत्यर्थः ॥ किमर्थं अतिसिद्धये महतेऽभ्युदयाय ॥ नादो-पासनया देवा ब्रह्मविष्णुमहेश्वराः ॥ भवंत्युपासिता नूनं यस्मादेते तदात्मका

इति शार्ङ्गदेवोक्तेर्नादस्तुतिर्ब्रह्मादिस्तुतिरिव महाभ्युदयहेतुरित्यर्थः ॥ तदेव विवृणोति ॥ आर्याणां विदुषां यः आनंदः ऐहिकमामुष्मिकं च सुखं तस्य निदानं तत्र नादस्य ऐहिकसुखहेतुत्वं ॥ सुखिनि सुखनिदानं दुःखितानां विनोदः श्रवणहृदयहारी मन्मथस्याग्रदूतः ॥ अतिचतुरसुगम्यो वल्लभः कामिनीनां जयति जगति नादो पंचमश्चोपवेदः इति शिष्टोक्तेः ॥ आमुष्मिकसुखहेतुत्वं तु गीतज्ञो यदि गीतेन नाप्नोति परमं पदं ॥ रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते इति स्कंदपुराणादिभ्यः ॥ ननु तत् आनंदकत्वं स्वररागादिसाध्यं तत् किमागतं नादमात्रस्येत्याशंक्य नादं विशिनष्टि स्वरेति ॥ स्वर आधारो येषां ते च ते रागाः श्रीरागवसंतादयः ॥ तेषां विषय आधारस्तं ॥ अथवा स्वराधारः सन् रागविषयश्च तं नादमूलकमेव स्वररागादिकमित्यर्थः ॥ नादस्य स्वरादीनां च तादात्म्येऽपि भूमौ भित्तिरित्यादिवत् सामान्यविशेषयोरप्याधाराधेयभावः संगच्छते तेन नाद एव स्वरादिरूपनानात्वभाक् सन् सुखहेतुरुचित एवेति भावः ॥ तथा स्थानविशेषः हृत्कंठमूर्धरूपाः तेषु ख्यातः मंद्रमध्यतारनामभिः प्रसिद्धस्तं ॥ रागस्तु रक्तौ मात्सर्ये इति विश्वः ॥ गणः समूहे प्रमथ इति विश्वः ॥ शैलवृक्षौ नगावगावित्यमरः ॥ अर्यः स्वामिनि वैश्ये च ॥ विषं तु गरले तोये इति विश्वः ॥ विहगे गगने च विः इति माधवीयनिघंटः ॥ दः पुमान्वन्हिदात्रोः स्यात् इति च स एव ॥ मह उद्धव उत्सव इत्यमरः ॥ स्थानं स्थितौ च सादृश्ये इति विश्वः ॥ पक्षे आधार इति रातेर्दानार्थात् स्वराध इति दधातेः पोषणार्थात् विषय इति यातेः प्राप्त्यर्थाच्च आतोनुपसर्गे इति कः ॥ आर्य इति सोस्य भक्तिरित्यपरः भज्यत इति भक्तिरिति कर्मार्थस्तत्र आर्य इति स्वामिन्यर्थे अर्यः स्वामिवैश्ययोरिति निपातः ॥ आर्यानिति अनप्राणने अस्मात् क्विप् ॥ अहन्निति सामान्यज्ञापकान्न लोपाभावः ॥ एकाजुत्तरपदे ण इति प्राप्तस्य नित्यणत्वस्य पदांतस्य इत्यनेस्य निषेधः ॥ पक्षे अमतेः मोनोधातोरिति नः ॥ पक्षे आनंदनीति क्विबंतस्य दानविशेषपरत्वेन नपुंसकत्वाद्ध्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वः ॥ अत्र प्रस्तुतस्य गणेशस्य दक्षिणामूर्तेर्विष्णोर्गुरोर्वा उभयार्थैरार्यानंदादिविशेषणैः अ-

प्रस्तुतस्य नादादेश्च संक्षेपेण कथनात् समासोक्तिरलंकारः ॥ परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिरिति काव्यप्रकाशलक्षणात् ॥ अस्याः ॥ प्रकृतार्थप्रतिपादकेन वाक्येन श्लिष्टविशेषणसामर्थ्याद् यत् अप्रस्तुतस्याभिधानं सा समासेन संक्षेपेण अर्थद्वयकथनात् समासोक्तिः ॥ १ ॥

**हेतुर्जगद्व्यवहृतेर्विराजयंती स्वयोगतो वीणाम् ॥**
**जयति व्यापनशीला शब्दात्मब्रह्मशक्तिः सा ॥ २ ॥**

अथ तादृशमेव नादमर्थश्लेषरूपेण प्रकारांतरेण सूचयन् शब्दार्थस्फुरणकारणं सरस्वतीस्मरणमाचरति ॥ हेतुर्जगद्व्यवहृतेरित्यार्यया ॥ सा प्रसिद्धा शब्दात्मब्रह्मशक्तिः शब्दात्मा वर्णपदवाक्यस्वरूपा शब्देषु आत्मबुद्धिर्यस्या इति वा शब्दाभिमानिनीति यावत् ॥ सा चासौ ब्रह्मणो विरिंचेः संबंधिनी शक्तिर्देवता च ॥ संबंधोत्र जन्यजनकरूपः ॥ सा जयति उत्कर्षेणास्ते ॥ अनेनेयमुपास्येति सूचितं ॥ सर्वोत्कर्षमेवाह ॥ जगद्व्यवहृतेस्त्रैलोक्यव्यवहारस्य हेतुः लोकव्यवहारस्य शब्दमूलत्वादित्यर्थः ॥ यतः व्यापनशीला सर्वत्र प्रचरंती ॥ तथा स्वयोगतः स्वांगसंगेन वीणां विपंचीं कच्छपीसमाख्यां विराजयंती शोभयंती न तु वीणया तस्याः शोभेत्यर्थः ॥ इति प्रस्तुतसरस्वतीपक्षे ॥ अथाप्रस्तुतनादपक्षे सा प्रसिद्धा शब्दात्मका नादस्वरूपा ब्रह्मणः परमात्मनः शक्तिः सामर्थ्यविशेषः जयति ॥ अनेनापि नाद उपासनीय इति सूचितं तथा च शार्ङ्गदेवः ॥ नादब्रह्म चिदानंदमद्वितीयमुपास्महे इति ॥ उत्कर्षमेव तस्य आह ॥ जगद्व्यवहृतेर्हेतुरिति ॥ नादस्य वर्णपदवाक्यानां व्यंजकत्वात् सर्वोपि लोकव्यवहारो नादमूल एवेति भावः ॥ तथा च स एव ॥ नादेन व्यज्यते वर्णः पदं वर्णात् पदाद्वचः ॥ वचसा व्यवहारोयं नादाधीनमतो जगत् ॥ इति ॥ तथा व्यापनशीला सर्वलोकव्यापिका ॥ पुनः स्वयोगतः निजाविर्भावसंबंधेन वीणां विराजयंती वीणामिति नादप्रकाशविषयाणां देहमात्राणां वाद्यमात्राणां चोपलक्षणं ॥ नादेन विना तेषां काष्ठलोष्टादिवद्वैयर्थ्यमिति भावः ॥ नादस्य परमात्मशक्तित्वे ससंमतिका कल्लिनाथोक्तिः

चैतन्यं सर्वभूतानामित्यस्य व्याख्यावसरे परवाक्पर्यायस्य ब्रह्मशक्तेर्नादस्य ब्रह्मणोत्यंतप्रत्यासन्नत्वात्तदुपासनायां कृतायां ब्रह्मप्राप्तिर्मणिप्रभाप्रवृत्तस्य मणिलाभवद्भवेदिति ॥ तथा चोक्तं ॥ अतो गीतप्रपंचस्य श्रुत्यादेस्तत्त्वदर्शनात् ॥ अपि स्यात् सच्चिदानंदरूपिणः परमात्मनः ॥ प्राप्तिः प्रभाप्रवृत्तस्य मणिलाभो यथा भवेत् ॥ प्रत्यासन्नतयात्यंतमिति ॥ विश्वावसोस्तु बृहती तुंबरोस्तु कलावती ॥ महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपीति वैजयंती ॥ आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिष्विति विश्वः ॥ अत्र समानविशेषणेन वाक्येन शब्दात्मब्रह्मशक्तिरिति अनेकार्थविशेष्यतया सरस्वतीरूपप्रस्तुतार्थादन्यो नादरूपोऽप्रस्तुतोर्थो गम्यत इत्यविशेषश्लेषनामा अर्थश्लेषः ॥ तथा च रुद्रटः ॥ अविशेषश्लेषोऽसौ विज्ञेयो यत्र वाक्यमेकस्मात् ॥ अर्थादन्यं गमयेदविशिष्टविशेषणोपेतमिति ॥ २ ॥

सकलकलोपाख्यकुलः संख्यावन्नाथमेंगनाथजनेः ॥
मुद्गलसूरेस्तनुजस्तनुधीरपि सोमनामाऽहम् ॥ ३ ॥
रागविबोधं विदधे विरोधरोधाय लक्ष्यलक्षणयोः ॥
प्राचां वाचां किंचित् सारं सारं समुद्धृत्य ॥ ४ ॥

इदानीं ग्रंथकृत् कुलपितामहपितृस्वनामख्यापनपूर्वं चिकीर्षितं प्रतिजानीते ॥ सकलकलेति रागविबोधमित्यार्यायुग्मेन ॥ रंजंति तल्लीना भवंति एभिरिति रागाः ते विबुध्यंते ज्ञायंते येन यस्मिन्वा इति विबोधः तं ग्रंथं अहं विदधे रचयामि ॥ कीदृशः अहं ॥ सकलकलेत्युपाख्या अवांतरनामधेयं यस्य तत्कुलं यस्य सः ॥ तथा संख्यावतां पंडितानां नाथादीश्वरात् मेंगनाथात् जनिर्जन्म यस्य तस्य मुद्गलसूरेर्मुद्गलाख्यपंडितस्य तनुजः पुत्रः ॥ तथा सोमनामा ॥ तनुधीरपि अल्पबुद्धिरपि ॥ अल्पमतिना कथं वा नवीनग्रंथो निर्मेय इत्यत आह ॥ प्राचामिति ॥ प्राचीनानां हनुमन्मतंगनिःशंकादीनां वा वाचो ग्रंथरूपास्तासां किंचित्सारं मुख्यमुख्यांशं समुद्धृत्य संगृह्य तद्वागनुसारितया मम न नवीननिर्माणे प्रयास इत्यर्थः ॥ त-

हिं सत्सु तन्निबंधेषु किमनेनेत्यत आह ॥ किमर्थं लक्ष्यं लोकगेयं रागादि-लक्षणं तत्प्रकाशकं शास्त्रं तयोर्यो विरोधः अन्यत्वाभासः तस्य रोधाय नि-वारणाय ॥ सत्यं संति महांतः प्राचीनग्रंथाः परं तदाशया नवबोधेन ल-क्ष्याणामन्यथात्वमाभाति ततस्तत्परिहारेण तयोरैक्यायेति भावः ॥ संख्या-वान् पंडितः कविः ॥ जनिरुत्पत्तिरुद्भवः ॥ धीमान् सूरिरित्यमरः ॥ मंग-नाथजनेरिति वैयधिकरण्येपि शब्दशक्तिस्वाभाव्येन गमकत्वात् बहुव्रीहिः ॥ समानाधिकरणानां बहुव्रीहिरिष्यत इति तु नेष्टिः ॥ किं तु अभिधानलक्षणाः कृत्तद्धितसमासा भवंतीति न्यायागत एवार्थः तेन वैयधिकरण्येधिगमकत्वे कंठेकाल इत्यादौ भवति ॥ नतु पंचभिर्भुक्तमस्येति पंचभुक्त इति ॥ तथा च वामनसूत्रं ॥ वैयधिकरण्ये बहुव्रीहिर्जन्माद्युत्तरपद इति ॥ राग इति ॥ विबोध इति च ॥ अकर्तरि च कारके संज्ञायामिति करणे अधिकरणे वा घञ् ॥ अत्र रागविबोध इत्यस्य संज्ञात्वात् विबोधमात्रस्य असंज्ञात्वेपि चा-दसंज्ञायामित्युक्तेर्न दोषः ॥ अत्र आर्याद्वयेपि व्यंजनानामसकृदावर्तनात् वृत्त्यनुप्रासः शाब्दोलंकारः ॥ एकस्याप्यसकृत्पर इति काव्यप्रकाशल-क्षणात् एकस्य अपिशब्दादनेकस्यापि व्यंजनस्य द्विर्बहुकृत्वो वा साद-श्य(? श्यं)वृत्त्यनुप्रास इति ॥ एवमग्रेऽपि ज्ञेयं ॥ ४ ॥

**पथ्याख्यायैवास्यां मम वाण्यां जयति विपुलाख्यास्पृक् ॥**
**यदनुग्रहादभीष्टाः सर्वेर्था अत्र सिद्ध्येयुः ॥ ५ ॥**

एवं सनामचिकिर्षितं प्रतिज्ञाय मंगलकारि पार्वतीकीर्तनमधिकश्लेषेण सूचयन् ग्रंथनिबंधनं छंदः सभेदं प्रकाशयति पथ्याख्येत्यार्यया ॥ पथ्या-ख्या पथ्येति नाम्ना आर्यैव आर्याख्यं मात्राछंद एव अस्यां ग्रंथरूपायां मम वाण्यां जयत्युत्कर्षेणास्ते ॥ न तु वर्णच्छंदो नाप्यन्यन्मात्राछंद इत्य-र्थः ॥ न केवलं पथ्याख्येत्याह ॥ कीदृक् ॥ तु पुनः विपुलाख्यां स्पृशत्या-दत्ते इति तत्स्पृक् स्पर्शनोक्त्या विपुलाल्पता सूचिता बाहुल्यं तु पथ्याया एव ॥ आर्ययैव निबंधने हेतुमाह ॥ यदनुग्रहात् यत्कर्मकांगीकारात् अत्र

ग्रंथे अभीष्टाः प्रतिपादयितुमिष्टाः सर्वे अर्था अभिधेयानि सिध्येयुः ॥ श-ब्दप्रकाश्यानि भवेयुरिति प्रौढ्या संभावनं ॥ सरिगमेत्यादिबहुतमकेवल-लघ्वक्षरमयानि छंदोनिबद्धानि वक्ष्यमाणरागरूपाणि नान्यच्छंदःसु समावेशा-र्हाणि इत्यर्थः ॥ इति प्रस्तुतार्थः ॥ अथाप्रस्तुतपक्षे आर्या पार्वत्येव मद्वाचि उत्कर्षेणास्ते तन्नामैव कीर्तयामीत्यर्थः ॥ यतः पथ्या हितावहा आख्या नाम यस्याः ॥ पुनः विपुलाख्यास्पृक् बहुतमनामधारिणी ॥ तस्या एव भ-जने हेतुमाह ॥ यदिति । यत्कर्तृकांगीकारात् चतुर्विधाः पुरुषार्थाः अत्र ज-गति भक्ते वा सिध्येयुः निष्पद्येरन् ॥ अत्रार्याछंदसि पूर्वार्धे चतुर्मात्राः स-प्तगणाः अंते गुरुरेकः ॥ विषमस्थाने जगणो न ॥ षष्ठे जगणो लघुचतु-ष्टयं वा भवति ॥ एवमेवोत्तरार्धे परंतु षष्ठे लघुरेक एव ॥ एवं सप्तपंचाशन्मा-त्रात्मिका आर्या ॥ अस्यां पूर्वार्धे षष्ठे लघुचतुष्टये सति द्वितीयलघ्वादिकं पदं भवति तत्रैवार्धे सप्तमे तु लघुचतुष्टये प्रथमलघुतः पदं भवति ॥ उत्त-रार्धे तु पंचमे लघुचतुष्टये प्रथमलघुत एव पदं ॥ एवं सति दलद्वयेपि आ-द्यासु द्वादशसु मात्रास्वेव पदपूर्तौ पथ्या भवति ॥ विपुला तु पूर्वार्धे तु अप-रार्धे वा दलद्वये वा आद्या द्वादशमात्रोल्लंघनेन पदविच्छेदे भवति ॥ तथा च स्वरार्धं चार्यार्धं इत्यारम्य विपुलान्या इत्येतदंतानि दश पिंगलसूत्राणि ॥ स्पृगिति स्पृशोनुदक इति क्विनि क्विन्प्रत्ययस्येति कुत्वं ॥ सिध्येयुरिति सं-भावनेलमिति चेत्सिद्धाप्रयोग इति लिङ् ॥ अत्रेदं वाक्यं अनेकार्थविशेषणं सत् प्रकृतात् छंदोरूपादर्थात् उत्कृष्टं पार्वतीरूपमर्थांतरं बोधयतीति अधि-कश्लेषाख्योलंकारः । यत्राधिकमारभ्यादसमानविशेषणं तथा वाक्यं ॥ अ-र्थांतरमवगमयेदधिकश्लेषः स विज्ञेय इति रुद्रटलक्षणात् ॥ ९ ॥

**गीतं द्वेधा मार्गो देशीमार्गः स यो विरिंचाद्यैः ॥**
**अन्विष्टो भरताद्यैः शंभोरग्रे प्रयुक्तोर्च्यैः ॥ ६ ॥**

अत्र रागविबोधं विदधे इति प्रतिज्ञया रागप्रतिपादने अर्थप्राप्ते सति रा-गाणां च गीतरूपत्वात् तत् द्वैविध्यं मार्गदेशीभेदाभ्यामाह ॥ गीतं द्वेधेति ॥

मार्गं लक्षयति मार्गः स इति ॥ मार्ग्यते अन्विष्यते इति मार्गः यो विरिंचाद्यैः ब्रह्मादिभिः अन्विष्टः गवेषितः सामवेदादुत्कृष्य प्रथमद्वितीयतृतीयचतुर्थमंद्रादिस्वार्थाख्यान् सप्त स्वरान् संगृह्य प्रवर्तित इत्यर्थः ॥ तथा च निःशंकः ॥ सामवेदादिदं गीतं संजग्राह पितामह इति ॥ भरताद्यैः शंभोरग्रे प्रयुक्तश्च अत एव अर्च्यः अभ्युदयहेतुत्वात्पूज्यः ॥ यद्यपि गीतवाद्यनृत्यानां त्रयाणामपि प्राच्यैर्मार्गदेशीत्वे उक्ते तथापि इह गीतस्यैव उपयोगात्तस्यैवोक्तिः ॥ मार्ग इति मार्ग अन्वेषणे अस्मात्कर्मणि घञ् ॥ ६ ॥

**देशे देशे रुच्या यज्जनहृद्रंजनं तु सा देशी ॥**
**स तु लोकरुचिविकलितः प्रायो लक्ष्यात्र देशी तत् ॥ ७ ॥**

देशीं लक्षयति ॥ देशे देशे इति यत्तु गीतमित्यर्थात् देशे देशे रुच्या तत्र तत्र परिचयतोनुरक्त्या जनहृद्रंजनं लोकहृदयाह्लादकं सा देशी ॥ तथाच कल्लिनाथः ॥ देशीति देशशब्देन तत्रत्या जना लक्ष्यंते तैर्यथेच्छं क्रियमाणायां गीतादिक्रियायामाचार्यकृता संज्ञेति ॥ देशीति ॥ पृषोदरादित्वात्साधुता ॥ यद्गीतं सा देशीति उद्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयंति पर्यायेण तल्लिंगभांजि भवंति सर्वनामानीति निर्दिश्यमानदेशीलिंगता तच्छब्दस्य ॥ एवं भेदद्वयं लक्षयित्वा तत्र देश्या एव बाहुल्येनात्र प्रतिपाद्यत्वं सहेतुकमाह स त्विति ॥ स मार्गः प्रायो यतः लोकरुचिविकलितः लोकानां रुच्या आलापादिविहीनः कृतः यत् इति तद्योगात् तत् ततः अत्र देशी प्रायो लक्ष्या प्रायोग्रहणात् क्वचिन्मार्गोपीत्यर्थः ॥ प्रायःपदं देहलीदीपन्यायेनोभाभ्यां संबध्यते ॥ तथा च बृहद्देश्यां मतंगः ॥ अबलाबालगोपालैः क्षितिपालैर्निजेच्छया ॥ गीयते याऽनुरागेण स्वदेशे देशिरुच्यते ॥ निबद्धश्चानिबद्धश्च मार्गोऽयं द्विविधो मतः ॥ आलापादिनिबद्धो यः स च मार्गः प्रकीर्तितः ॥ आलापादिविहीनस्तु स च देशी प्रकीर्तित इति ॥ कल्लिनाथोऽपि रागविवेकाध्यायव्याख्याने देशीत्वं च तत्तद्देशमनोरंजनैकफलत्वेन कामचारप्रवर्तितत्वं ॥ नियमे तु सति तेषां गीतादिनां मार्गत्वमेवेति ॥७॥

**अत्र श्रुतिस्वराद्या वीणाभेदाः स्वसंख्यया मेलाः ॥**
**रागास्तद्रूपाणि च पंचविवेक्या क्रमाज्ज्ञेयम् ॥ ८ ॥**

अथ ग्रंथे विवक्ष्यमाणान् पदार्थान् संगृह्णाति ॥ अत्र श्रुतिस्वराद्या इति ॥ अत्र ग्रंथे पंचविवेक्या विविच्यंते प्राकरणिकपदार्था येष्विति विवेकाः पंचभिर्विवेकैः अध्यायसर्गादिवत् अवच्छेदकभेदैः क्रमात् ज्ञेयं ज्ञेयाश्च ज्ञेयानि चेति ॥ तत्र प्रथमविवेके श्रुतयः स्वराश्चाद्या येषां ते पदार्थाः ज्ञेयाः ॥ आद्यपदेन श्रुतिज्ञानोपायः ॥ स्वराणां शुद्धत्वविकृतत्वे मंद्रत्वादि वादिविवादित्वादिग्रामलक्षणं मूर्छनाः क्रमः खाडवौडविते शुद्धतानकूटतानाः प्रस्तारादि ॥ वर्णभेदाः चतुस्त्रिंशदलंकाराः ॥ ग्रहांशन्यासाश्चेत्येषां संग्रहः ॥ द्वितीयविवेके तु वीणाभेदाः वीणा च तस्या भेदाः शुद्धमेलेत्यादयश्च ते ॥ तृतीये तु स्वसंख्यया सहेत्यर्थात् मेलाः मिलंति वर्गीभवंति रागा वेष्विति तदाश्रयभूताः स्वरसंस्थानविशेषाः घा(था)टेति भाषायां ॥ अत्र संख्याग्रहणेन प्रस्तारनष्टोद्दिष्टान्यपि उपलक्ष्यंते तेन मेलसंख्याप्रस्तारनष्टोद्दिष्टानि मेलाश्चेत्यर्थः ॥ ते ज्ञेयाः ॥ चतुर्थे तु रागाः ज्ञेयाः ग्रहादिखाडवत्वादितत्तत्कालगेयत्वैर्युक्ता इतिशेषः ॥ पंचमे तु तद्रूपाणि तेषां रागाणां रूपाणि लक्ष्यप्रसिद्धनादमयानि यानि च स्वरूपाणि ज्ञेयानि ॥ मेलेति विवेकेति च अधिकरणे अकर्तरि चेति घञ् ॥ पंचविवेकीति समाहारे द्विगौ अकारांतोत्तरपदो द्विगुः स्त्रियामिष्ट इति स्त्रीत्वात् द्विगोरिति ङीप् ॥ ज्ञेयमिति नपुंसकमनपुंसकेनेत्येकशेषे पाक्षिक एकवद्भावः ॥ ८ ॥

**पुरुषार्थसार्थसिद्ध्यै सिषेवयिषुरपि विरिंचिहरिगिरिशान् ॥**
**नादमुपासीत सुधीर्यदिमे गदितास्तदात्मानः ॥ ९ ॥**

ननु रागविबोधायारब्धे ग्रंथे भवतु नामैवं वस्तुसंग्रहः परंतु रागैरेव किं विबोध्यमानैरित्याशंक्याद्यपद्यद्वयेन सूचितं प्रतिपाद्यरागरूपं नादमुपास्यतया विधत्ते ॥ पुरुषार्थेति ॥ पुरुषार्थानां सार्थः समूहस्तस्य सिद्धिः प्राप्तिस्तदर्थं

सुधीः नादं उपासीत ॥ ननु धर्मादिसिद्धये प्रसिद्धब्रह्मादिदेवानेव सवतोमित्यत आह ॥ सिषेवयिषुरपि विरिंचिहरिगिरिशानिति ॥ ब्रह्मादीन्सेवितुमिच्छुरपि नादमेव सेवेतेत्यर्थः ॥ यत् य इमे विरिंचादयः तदात्मानः नादादभिन्ना गदिताः प्राचीनैरुक्ताः ॥ भक्तैर्युगपत् त्रयः सेवितुमशक्या इति एकस्मिन्नाद उपासिते तदात्मकत्वात् तेषां त्रयोऽप्युपासिता भवंतीति भावः ॥ सुधीरितिपदेनेदमेव सूचितं ॥ तथा च शार्ङ्गदेवः ॥ नादोपासनया देवा ब्रह्मविष्णुमहेश्वराः ॥ भवंत्युपासिता नूनं यस्मादेते तदात्मका इति ॥ सार्थो वणिक्समूहे स्यात् तथा संघातमात्रके इति विश्वः ॥ ९ ॥

**आत्मेरयति विवक्षुश्चित्तं तद्देहवह्निमाहंति ॥**
**स प्रेरयते दीप्त्या ब्रह्मग्रंथिस्थितं मरुतम् ॥ १० ॥**
**ऊर्ध्वं विचरन् क्रमतो नाभिहृदयकंठमूर्धवक्त्रे सः ॥**
**अतिसूक्ष्मादिकसंज्ञान् नादांस्तनुतेऽत्र गानार्हाः ॥ ११ ॥**

एवं नादोपास्तिविधिना रागादिज्ञास्यतां साधयित्वा नादाभिव्यक्तिक्रममाह आत्मेरयतीत्यारभ्य नादांस्तनुते इत्यंतेन ग्रंथेन ॥ विवक्षुः वक्तुमिच्छुः आत्मा जीवश्चित्तं मन ईरयति प्रेरयते ॥ तन्मनो देहवह्निं औदर्यवह्निं आहंति ताडयति प्रबोधयति ॥ स वह्निः ब्रह्मग्रंथिस्थितं आधाराख्यचक्रात् ऊर्ध्वं द्व्यंगुलांतरेण देहमध्यं नाम चक्रं ततोऽप्यूर्ध्वं नवांगुलांतरेण उत्सेधायामयोश्चतुरंगुले नाभिकंदः स ब्रह्मग्रंथिरुच्यते ॥ तत्स्थितं मरुतं दीप्त्या ऊष्मणा प्रेरयते तत ऊर्ध्वं चालयति ॥ तथाचोक्तो ब्रह्मग्रंथिर्निःशंकेन ॥ आधारो द्व्यंगुलादित्यारभ्य ब्रह्मग्रंथिरिति प्रोक्त इत्यंतेन ॥ स मरुत् क्रमात् ऊर्ध्वं विचरन् प्रसरन् सन् नाभिहृदयकंठमूर्धवक्त्रे पंचसु नाभ्यादिस्थानेषु क्रमतः अतिसूक्ष्मादिकसंज्ञान् अतिसूक्ष्मसूक्ष्मपुष्टापुष्टकृत्रिमाख्याननादास्तनुते प्रकाशयति ॥ क्रमत इति उभयत्र संबध्यते ॥ नाभावतिसूक्ष्म इत्याद्ययं निःशंकमतेन क्रमः ॥ मतंगमते तु सूक्ष्मश्चैवातिसूक्ष्माश्च व्यक्तोऽव्यक्तश्च कृत्रिमः ॥ सूक्ष्मनादो गुहावासि हृदये चातिसूक्ष्मक इत्याद्युक्तं ॥ नादानिति नाभ्याद्याश्रयभेदात् बहुवच-

नं ॥ वक्र इति प्राण्यंगत्वात् द्वंद्वश्च प्राणीति एकवत् ॥ अथ पंचानामपि सा मान्येन गीतोपयोगित्वे प्राप्ते हृत्कंठमूर्धस्थानेष्वेव वक्ष्यमाणश्रुतिपदभूतनाडीसत्तया तत्रत्यत्रयाणामेव गीतोपयोगितामाह अत्र गानार्हाः ॥ १० ॥ ११ ॥

हृत्कंठमूर्धनादाः क्रमादमी मंद्रमध्यताराख्याः ॥
द्विगुणा यथोत्तरं च श्रुतितां स्वरतां च वच्मि चैतेषाम् ॥१२॥

हृत्कंठमूर्धनादा इति येष्विति अत्र शिष्टं स्पष्टं ॥ अथैतेषामेव त्रयाणां नामांतराणि स्वरूपभेदं चाह ॥ क्रमादमी मंद्रमध्यताराख्याः द्विगुणा यथोत्तरं चेति ॥ अमी हृत्कंठमूर्धनादा एव क्रमान्मंद्राद्याख्याः यथोत्तरं द्विगुणाश्च ॥ हृन्नादो मंद्रः कंठनादो मध्यः मूर्धनादस्तार इति ॥ द्वौ गुणौ उच्चारणप्रयत्ने येषां ते द्विगुणाः यथोत्तरं उत्तरोत्तरं मंद्राख्यात् हृन्नादात् उत्तरो कंठनादो द्विगुणप्रयत्नसाध्यत्वात् द्विगुणः तथा तस्मादुत्तरस्ताराख्यो मूर्धनादः तस्मात् तथैव द्विगुणा इत्यर्थः ॥ यथोत्तरमिति यथासादृश्य इति वीप्सायामव्ययीभावः ॥ एवं पंचसु त्रयाणां गानोपयोगितां नामांतराणि स्वरूपभेदं चोक्त्वा नादानां श्रुतिभावं स्वरभावं च प्रकाशयितु प्रतिजानाति श्रुतितां स्वरतां चेति ॥ एषां स्थानत्रयभेदाभिन्ननादानां श्रुतिस्वरूपत्वं स्वररूपत्वं च तथा वच्मि इत्यर्थः ॥ १२ ॥

हृद्यूर्ध्वनाडिकास्थद्वाविंशत्यणुतिरोजनाडीषु ॥
तावन्तः श्रुतिसंज्ञाः स्युर्नादाः परपरोच्चोच्चाः ॥ १३ ॥

तत्र प्रथमोद्दिष्टां श्रुतितां हृदये विवृणोति ॥ हृद्यूर्ध्वेति ॥ हृदि ऊर्ध्वा या नाडिका सुषुम्ना उर्ध्वे वा ये नाडिके इडापिंगले तत्स्थाः तत्संलग्ना श्च ताः द्वाविंशतिः द्वाविंशतिसंख्याकाः अणवः सूक्ष्माः तिरोजास्तिरश्चीनाश्च याः नाड्यः सच्छिद्रनलिकाः तासु तावंतो द्वाविंशतिर्नादाः मरुदाघाताभिव्यक्ता इति शेषः ॥ श्रुतिसंज्ञाः श्रुतिरिति संज्ञा नाम येषां ते स्युः ॥ की-

दशाः नादाः परपरोच्चोच्चाः ॥ परपरे उच्चोच्चाः येषु ते यद्वा परस्मात्परः परपरः उच्चात् उच्चः । उच्चोच्चाः ॥ परपर उच्चोच्चो येषु ते ॥ प्रथमात परो द्वितीय उच्चः ततोऽपि परस्तृतीय उच्चोच्च इत्यर्थः ॥ एवं द्वाविंशति-र्यावत् ॥ परेभ्यः परे उच्चेभ्यः उच्चाः इति वा ॥ वायुः सोपानपरंपरा-मिव सच्छिद्रनलिकाद्वाविंशतिमारोहात् उच्चतया परस्परविलक्षणाः द्वाविं-शतिसंख्या एव श्रुतीस्तनोतीति भावः ॥ परपरोच्चोच्चा इति पक्षे वीप्सायां द्वित्वं पक्षेति पंचमीति विभागात्समासः बहुलोक्तेर्वा ॥ १३ ॥

**एवं गले च शीर्षे ताभ्यः सप्त स्वराः श्रुतिभ्यः स्युः ॥**
**स्वरता तेषु निरुक्ता मनः स्वतो रंजयंतीति ॥ १४ ॥**

एवं हृदय उक्तमर्थं कंठे मूर्धनि चाऽऽदिशति ॥ एवं गले च शीर्षे इति ॥ यथा हृदि नाडीसद्भावात्तद्दशश्रुतिद्वाविंशतेरुद्भवः एवं अनयोरपीत्यर्थः ॥ एवंप्रथमोद्दिष्टश्रुतिभावं व्याख्याय पश्चादुद्दिष्टं स्वरभावं नादानां विवृणोति ताभ्यः सप्तेति ॥ ताभ्यो द्वाविंशतिसंख्याभ्यः श्रुतिभ्यः सप्त स्वराः स्युः ॥ यद्वा ताभ्यः इत्यस्य शास्त्रांतरप्रसिद्धाभ्यः इत्यर्थात् श्रूयंत इति श्रुतय इति कर्मणि निरुक्तिः सूचिता ॥ तेन श्रवणयोग्या एव श्रुतय इति ॥ यद्यपि श्रवणयोग्यता अनुरणनात्मकस्य स्वराख्यस्य दीर्घध्वनेरपि वर्तते तथापि मा-रुतनखाद्याघातानंतरप्रथमक्षणवर्तिश्रवणमात्रयोगित्वमिह गृह्यते ॥ इदानीं स्वरशब्दस्य व्याख्यामाह स्वरता तेष्विति ॥ तेषु सप्तसु नादविशेषेषु स्वर-ता स्वरभावो निरुक्तो व्याख्यातः । कथं मनः श्रोतृचित्तं स्वतः कारणांतर-निरपेक्षं रंजयंति अनुरक्तं कुर्वंतीति स्वराः इति एवं स्वतः आत्मनैव रंजय-तीति स्वर इत्यर्थः ॥ तथा च निःशंकः ॥ श्रवणात् श्रुतयो मताः श्रुत्यनं-तरभावी यः शब्दोनुरणनात्मकः ॥ स्वतो रंजयति श्रोतृचित्तं स स्वर उच्य-ते इति ॥ श्रुतय इति कर्मणि स्त्रियां क्तिन्निति क्तिन् ॥ स्वरा इति स्वतः शब्दोपपदात् रंजेरन्येभ्योपि दृश्यत इति ॥ टिलोपेतःशब्दस्य पृषोदरादि-त्वाल्लोपः ॥ १४ ॥

षड्जर्षभगांधरा मध्यमपंचकधैवतनिषादाः ॥
इत्याभिधास्तेमीषां सरिगमपधनीति संज्ञाऽन्या ॥ १५ ॥

एवं सप्तानां सामान्येन स्वर इति सार्थकं नामोक्त्वा पार्थक्येन सप्तापि नामान्याह षड्जर्षभेति ॥ ते सप्त स्वराः इत्याभिधाः इति अभिधा नाम एषां ते इति ॥ कथं षड्जेत्यादि ॥ प्रथमः षड्जः द्वितीय ऋषभ इत्यादि ॥ षड्जर्षभगांधारा इति पृथक्द्वंद्वः पंचम एव पंचमकः शिष्टं स्पष्टं ॥ ग्रंथांतरे व्याख्यानविशेषैरन्वर्थानि षड्जादिनामान्यभिधाय लाघवेनाग्रे व्यवहाराय सप्त नामांतराण्याह अमीषामिति ॥ अमीषां षड्जादीनां सरिगमपधनीति अन्या संज्ञा नाम जातावेकवचनं नामानीत्यर्थः । तत्र षड्ज एव सः ऋषभ एव रिरित्यादि ॥ सरिगमपधनि इति पृथक् पदं सर्वो द्वंद्वो विभाषैकवदित्येव ॥१५॥

तेषां श्रुतयः क्रमतो वेदा रामा दृशौ तथांबुधयः ॥
निगमा दहनाः पक्षावेवं द्वाविंशतिः सर्वाः ॥ १६ ॥

श्रुतिभ्यः सप्त स्वराः स्युरित्युक्तेः श्रुतिद्वाविंशतेरपि सामान्येन स्वरसप्तकाभिव्यंजकत्वे प्राप्ते श्रुतीनां स्वरव्यंजनकत्वं व्यवस्थापयति ॥ तेषां श्रुतय इति ॥ तेषां सरिगादीनां श्रुतयः क्रमतः षड्जादिक्रमेण वेदाः रामाः दृशौ इत्यादि ॥ अत्र चतुःसंख्याकनिमगरूपार्थवाचिना वेदशब्देन इहानुपयोगात्तदर्थगतं चतुरितिसंख्यामात्रं लक्ष्यते न त्वर्थोऽप्यभिधीयते ॥ एवं रामा इत्यादिषु ॥ तेन सस्य श्रुतयः वेदा इति द्वे मस्य अंबुधय इति चतस्र एव ॥ धस्य दहना इति तिस्रः ॥ नेः पक्षाविति द्वे इत्यर्थः । इदानीं कोहळमतंगादिदर्शितेषु नवधाश्रुतिविकल्पेषु तथा तथा दोषदर्शनात्समीचीनं द्वाविंशतिपक्षमेव निःशंकमतानुसारेण समर्थयन्ननुवदति ॥ एवं द्वाविंशतिः सर्वा इति ॥ सर्वाः सर्वप्रकाराः मंद्रादिभेदभिन्ना वेणुवीणादिस्था अपि श्रुतयः द्वाविंशतिरेव न न्यूनाः नाप्यधिका इत्यर्थः सर्वं वाक्यं सावधारणमिति न्यायात् एवकारः ॥ कोहळमतं तु ॥ द्वाविंशतिं केचिदुदाहरंति श्रुतीः श्रुतिज्ञानविचारदक्षाः ॥

षट् षष्ठिभिन्नाः खलु केचिदासामानंत्यमेव प्रतिपादयंति इति ॥ मतंगमतं तु सा चैकापि द्विधा ज्ञेयेत्यादि सम्यक्तु श्रुतयो नवेत्यंतम् ॥ १६ ॥

**तुर्यायां सप्तम्यां तासु नवम्यां श्रुतौ त्रयोदश्याम् ॥**
**सप्तदशीविंशीद्वाविंशीषु च ते स्फुटाः क्रमतः ॥ १७ ॥**

एवं नियमितश्रुतिसंख्यानामपि स्वराणां स्वस्वांतिमश्रुतिषु स्फुटतां कथयति ॥ तुर्यायामिति ॥ ते सरिगमपधनयः तासु द्वाविंशतौ श्रुतिषु मध्ये क्रमतः षड्जादिक्रमेण स्फुटाः प्रकटाः भवंतीति शेषः ॥ क्व तुर्यायां श्रुतौ इत्यादि तत्र चतुःश्रुतिरपि सः चतुर्थ्यां श्रुतौ स्पष्टो भवति त्रिश्रुतिरपि रिः सप्तम्यां स्वस्य तृतीयायामित्यर्थः ॥ द्विश्रुतिर्गः नवम्यां स्वस्य द्वितीयायां ॥ चतुःश्रुतिर्मस्त्रयोदश्यां स्वस्य चतुर्थ्यां ॥ चतुःश्रुतिश्च पः सप्तदश्यां स्वस्य चतुर्थ्यां ॥ त्रिश्रुतिर्धः विंश्यां स्वस्य तु तृतीयायां ॥ द्विश्रुतिर्निः द्वाविंश्यां स्वस्य तु द्वितीयायां ॥ सप्तदशीविंशीद्वाविंशीषु इति द्वंद्वः ॥ अत्र श्रुतिभ्यः स्वराः स्युरित्युक्तं ॥ तत्र पंच पक्षाः संभवति जातिव्यक्त्योरिव स्वरश्रुत्योस्तादात्म्यमिति प्रथमः ॥ दर्पणे मुखविवर्तवत् श्रुतिषु स्वरो विवर्तत इति द्वितीयः ॥ घटस्य मृत्पिंडदंडकार्यत्ववत् स्वरस्य ॥ श्रुतिकार्यत्वमिति तृतीयः ॥ क्षीरं दधिरूपेणेव श्रुतयः स्वररूपेण परिणमंत इति चतुर्थः ॥ दीपे सत्यंधकारस्थितघटाद्यभिव्यक्तिवत् श्रुतिषु स्वराणामभिव्यक्तिरिति पंचमः ॥ तेषु पूर्वे त्रयः तथा तथा दूषिता इति चरमौ द्वावदुष्टावंगीकृतौ ॥ तयोरपि द्वितीयोऽत्रांगीकृतः चतुर्थ्यां स्फुट इति ॥ इति विस्तरभिया संक्षिप्योक्तं ॥ विंशीद्वाविंशीति विंशत्यादेस्तमडन्यतरस्यामिति तमड्भावपक्षेतिविंशतेर्डितीति डतिलोपः ॥ डटष्टित्वात् ङीप् ॥ विपुलार्या छंदः ॥ १७ ॥

**पृथुवक्ष्यमाणवीणा मेरौ स्थाप्याश्चतस्र इति तंत्र्यः ॥**
**मंद्रतमध्वनिराद्या त्रयं क्रमोच्चस्वनं किंचित् ॥ १८ ॥**

अत्र शरीरे प्रतिस्थानं द्वाविंशतिनाडीसंनिवेशस्तत्रत्यश्रुत्युत्पत्तेश्च परोक्षत्वा-

त् ॥ तत्सद्भावे संदेहः स्यात् इति तन्निरासार्थं प्रत्यक्षतः संवादाय वीणायां श्रुतिस्वरज्ञानोपायं ग्रंथकृत् निजधियैवाह ॥ पृथुवक्ष्यमाणेत्यार्याचतुष्टयेन ॥ पृथुस्तिर्यक् विस्तीर्णो यो वक्ष्यमाणाया द्वितीयविवेके कथयिष्यमाणाया रुद्रवीणायाः मेरुमेढकः वीणोर्ध्वभागेऽवष्टंभितस्तंत्र्याधारः सारीविशेष इति यावत्तस्मिन् चतस्रस्तंत्र्यो लोहतंतवः इति प्रकारेण स्थाप्याः ॥ तमेवाह ॥ आद्या वादकवामा सती प्रथमतंत्री मंद्रतमध्वनिः अतिशिथिलीकरणेन अतिनीचस्वना कार्येति शेषः ॥ तथा त्रयं द्वितीयतृतीयतुर्यतंत्रीत्रयं किंचिदुच्चस्वना ततोऽपि तृतीया तथा तस्या अपि तुरीया तद्वदित्यर्थः ॥ १८ ॥

**न्यस्याः सूक्ष्माः सार्योऽथद्वाविंशतिरधश्चरमतंत्र्याः ॥**
**तंत्री यथेयमुच्चोच्चतररवा किमपि तासु स्यात् ॥ १९ ॥**

अथ तदनंतरं चरमतंत्र्याः अधः वीणादंडपृष्ठे इत्यर्थः सूक्ष्माः द्वाविंशतिः सार्यः काष्ठादिमय्य ऊर्ध्वपट्टिकाः न्यस्याः स्थाप्याः ॥ स्थापनप्रकारमाह ॥ यथा येन प्रकारेण इयं तुरीया तंत्री तासु द्वाविंशतिसारिषु किमपि मनाक् उच्चः उच्चतरश्च रवो यस्याः सा स्यात् भवेत् तथा स्थाप्या इत्यर्थः ॥ अत्र मेरुस्थतुर्यतंत्रीध्वनेः प्रथमसारी किंचिदुच्चध्वनिः द्वितीया तु सारी मेरुस्थतुर्यतंत्रीध्वनेरेव किंचिदुच्चतरध्वनिः एवं द्वितीयसार्यपेक्षया तृतीयतुर्यसार्योः उच्चोच्चतरत्वे एवमेव तृतीयसार्याद्यपेक्षया चतुर्थपंचम्यादिषु द्वयोर्द्वयो रुच्चोच्चतरत्वे वेदितव्ये ॥ तास्विति कटे आस्ते इतिवत् ॥ औपश्लेषिकमधिकरणम् ॥ १९ ॥

**द्व्यंतर्नेष्टोन्यरवः श्रुतय इति रवा इहांत्यतंत्र्यां सः ॥**
**ऋषभस्तृतीयसार्यां गः पंचम्यां नवम्यां मः ॥ २० ॥**

उच्चोच्चतरत्वयोरपि प्रकारमाह ॥ द्व्यंतरिति ॥ द्व्यंतः द्वयोर्द्वयोर्मध्ये अन्यरवः नेष्टः नादांतरं न कार्यं ॥ यथा तंत्रीध्वन्योः सारीध्वन्योश्च म-

ध्ये पूर्वध्वनेः किंचिदुच्चं परध्वनेस्तु किंचिन्नीचं नादांतरं नोत्पद्येत तथा ध्व-न्योरुच्चोच्चतरत्वं कार्यमित्यर्थः ॥ ध्वंतरित्यत्र सामर्थ्याद्वीप्सा ॥ प्रकृतमाह श्रुतय इति ॥ इति रवाः तंत्रीमेरुसारीसंश्लेषोद्भवा ये ध्वनयः ते श्रुतयः श्रुतिशब्दवाच्याः ॥ इति श्रुतीः प्रतिपाद्य तत्र यथाबंधं षड्जाद्यभिव्यक्तिं कथयति ॥ इहांत्येति ॥ इह सारिषु ध्वनिषु मध्ये अंत्यतंत्र्यां मेरुश्लिष्टतुर्यतंत्रीरवे सः षड्जः अभिव्यज्यत इति शेषः ॥ अत्र तंत्रीशब्देन तदुद्भवो रवो लक्ष्यते ॥ ऋषभः तृतीयसार्यां तृतीयसारीरवे व्यज्यते ॥ सारीणां तृतीयपंचमनवमत्वादिकं सार्यपेक्षया न तु मेर्वपेक्षयेति ज्ञेयं ॥ इहापि लक्षणा ॥ गः पंचम्यां ॥ नवम्यां मः सार्यामिति शेषः सर्वत्र ॥ २० ॥

**पस्तु त्रयोदशीस्थः षोडश्यष्टादशीस्थितौ च धनी ॥**
**द्वाविंशीस्थः षड्जो द्विगुणसमः पूर्वषड्जेन ॥ २१ ॥**

पस्तु पंचमस्तु त्रयोदशीस्थः त्रयोदश्यां तिष्ठति स्फुटत्वेनेति तत्स्थः ॥ षोडश्यष्टादशीस्थितौ च ध-नी षोडशीस्थितो धः अष्टादशीस्थितो निः तुचशब्दौ समुच्चये ॥ द्वाविंशीस्थः षड्जः षड्जोऽत्र मध्यस्थानस्थ इति ज्ञेयं ॥ कीदृक् पूर्वषड्जेन मेरुतंत्रीस्थमंद्रषड्जेन द्विगुणसमः द्विगुणश्चासौ समश्च द्विगुणप्रयत्नसाध्यः सन्नपि समध्वनिरित्यर्थः ॥ यथा देवदत्तो नीचस्थलादुच्चस्थानगतोऽपि स एवेति प्रत्यभिज्ञायते तथेत्यभिप्रायः ॥ २१ ॥

**ध्वनिशुद्धिनिश्चयार्थं विकृतन्यर्थं च सश्चतुःश्रुतिकः ॥**
**पुनरुक्त इति मतं मे श्रुतिस्वरावगमनाय लघु ॥ २२ ॥**

ननु देहस्थश्रुतिस्वरसंवादाय वीणायां द्वाविंशतिसंख्याकैः श्रुतिपदैः स्वराभिव्यंजनं वक्तुं युक्तं न तु षड्विंशतिसंख्याकैरित्याशंक्याह ॥ ध्वनिशुद्धीति ॥ चतुःश्रुतिकः सः षड्जः पुनरुक्तः किमर्थं ? ॥ ध्वनीनां तंत्रीमेरुसारीसंश्लेषजन्यानां श्रुतिसंज्ञार्हाणां या शुद्धिः तन्निश्चयार्थं स्थापनं शुद्धं जातमिति प्रत्ययाय ॥ यथा पूर्वोक्तस्थापनया मध्यषड्जेन सह मंद्रषड्जस्य मेरुस्थस्य

संवादः सा शुद्धेति निश्चयः पुनश्चतुःश्रुतिकषड्जं विना न संभवेदित्याशयः ॥ किंच विकृतन्यर्थं च विकृतः शुद्धादन्यो वक्ष्यमाणो यः निषादः तदर्थं च ॥ पुनःषड्जस्य श्रुतिकथनं विना निषादस्य षड्जाद्यश्रुत्यवलंबनेन कैशिकीत्वं तच्छ्रुतिद्वयावलंबनेन काकलीत्वं च वक्ष्यमाणं संवादाय नोपपद्येतेति भावः ॥

उक्तं श्रुतिस्वरप्रत्यायनं निगमयति ॥ इति मतं म इति ॥ श्रुतिस्वराणां यत् अवगमनं संवादाय प्रत्यायनं तदर्थं मे इति मतं मया इति मन्यत इत्यर्थः ॥ कथं मतं ? ॥ लघु विस्तरभयात् संक्षिप्तं यथा तथा ॥ अत्र विस्तरकातरेण मया वीणाद्वयप्रदर्शनपूर्वं सारणाभिः स्वरेषु स्वरांतरप्रवेशो न कथितः किंतु उपायमात्रं स्वधिया कथितमित्यर्थः ॥ मतमिति मतिबुद्धीत्यादिना वर्तमाने क्तः तद्योगे क्तस्य च वर्तमान इति कर्तरि षष्ठी ॥ २२ ॥

**इति सप्तोक्ताः शुद्धा विकृतान्सप्तैव वच्मि सह नाम्ना ॥**
**साधारणोंतरश्च श्रुतिं श्रुती चैत्य गो मस्य ॥ २३ ॥**

इदानीं पूर्वोक्तश्रुतिव्यवस्थापकस्वरसप्तकमनूद्य तत्र शुद्धतां विधत्ते ॥ इति सप्तोक्ताः शुद्धा इति ॥ अत्र यत्तदोरध्याहार आर्थः इति पूर्वोक्तप्रकारेणोक्ता ये सप्त ते शुद्धाः ज्ञेया इति शेषः ॥ एवं शुद्धाः सप्त सह नामभिः प्रोक्ताः अथ विकृतानपि सप्तसंख्याकानेव सनाम लक्षयितुं प्रतिजानाति ॥ विकृतानिति ॥ सप्तैव नामभिरित्यर्थः ॥ तत्र तावत् गांधारनिषादयोर्द्विधा विकृतत्वं लक्षयन् द्वे द्वे नामनी आह उत्तरार्धपूर्वार्धाभ्यां ॥ साधारण इति ॥ गः मस्य श्रुतिं श्रुती च एत्य प्राप्य साधारणः अंतरश्च क्रमेण स्यादिति च शषः ॥ गांधारो मध्यमस्य प्रथमायां श्रुतौ आदितस्तु दशम्यां तिष्ठन् साधारणनामा भवति ॥ तथा गांधार एव मध्यमस्य मस्य द्वितीयायां श्रुतौ आदितस्त्वेकादश्यां तिष्ठन् अंतरनामा ॥ २३ ॥

**निः कैशिकी च काकल्यथ सस्यैकां भजंश्च तां ते द्वे ॥**
**निगमा मृदुपरसमयाः समपतृतीयश्रुतिस्थित्या ॥ २४ ॥**

अथ निः सस्य एकांतां श्रुतिं द्वे ते श्रुती भजन् गृह्णन्सन्कैशिकी काकली च क्रमेण स्यादिति च शेषः ॥ निषादः षड्जस्य प्रथमायां श्रुतौ तिष्ठन् कैशिकीनामा ॥ तथा निषाद एव षड्जस्य द्वितीयायां श्रुतौ तिष्ठन् ॥ काकलीनामा इत्यर्थः कैशिकीति इन्नंतः काकली ङ्यंतः ॥ इदानीं निगयोस्तृतीयं यस्य तु प्रथमं विकृतत्वं लक्षयन् एकैकं नामाह ॥ निगमा इति ॥ निषादगांधारमध्यमाः समपतृतीयश्रुतिस्थित्या समपानां षड्जमध्यपंचमानां यास्तृतीयश्रुतयस्तासु या स्थितिः स्फुटता तया मृदुपराः मृदुशब्दात्परा ये समपाः ते स्युरिति शेषः ॥ निषादस्य द्वितीयश्रुतिं त्यक्त्वा यदा षड्जस्य तृतीयश्रुतौ तिष्ठति तदा मृदुसनामा ॥ एवं गांधारः स्वद्वितीयश्रुतिं त्यक्त्वा यदा मध्यमस्य तृतीयायां आदितस्तु द्वादश्यां तिष्ठति तदा मृदुमनामा॥ तथा मध्यमः स्वचतुर्थीं त्यक्त्वा यदा पंचमस्य तृतीयायां आदितस्तु षोडश्यां तिष्ठति तदा मृदुपनामा ॥ यद्यपि स्वस्वचतुर्थश्रुतित्यागेन स्वस्वतृतीयश्रुतिस्थानां षड्जमध्यमपंचमानामेव प्राचीनैर्विकृतत्वमुक्तं तथापि तथा देशीं लक्ष्ये षड्जपंचमयोः स्वस्वचतुर्थश्रुतित्यागादर्शनात् स्वस्वतृतीयस्थानामपि षड्जमध्यमपंचमानां लक्ष्ये निषादत्वगांधारत्वमध्यमत्वैरेव व्यवहारदर्शनाच्च निगमानामेव विकृतत्वमिहोक्तं ॥ एवमादिप्राचीनविरोधं तु ग्रंथकृदेवाग्रे ससंमति परिहरिष्यति ॥ २४ ॥

**द्वादश विकृतान्पूर्वे वदंति तत्र तु पृथक् पृथग्ध्वनितः ॥**
**सप्तैव स्युर्भिन्ना न पंच यदिमे समध्वनयः ॥ २५ ॥**

ननु प्राचीनैर्द्वादश विकृता उक्ताः इह तु सप्तैवेति विरोध इत्याशंक्य प्राच्यमतसंख्यानुवादपूर्वं सप्तैवेति मतं युक्त्या दृढयति ॥ द्वादशेत्याद्यार्याचतुष्टयेन ॥ प्राचीनास्तु विकृतान्द्वादश वदंति ॥ तद्यथा ॥ षड्जः स्वादिमांतिमश्रुत्योः क्रमेण निषादर्षभाभ्यां गृहीतयोः स्वोपांत्यश्रुतिस्थित्या च्युत इत्येको विकृतः ॥ तथा स एव स्वप्रथमद्वितीयश्रुत्योर्निषादेन गृहीतयोः स्वांतिमश्रुतिस्थित्या अच्युत इति द्वितीयः ॥ तथा ऋषभः षड्जस्यांत्यां श्रुतिं गृहीत्वा सश्चतुःश्रुतिः सन् विकृत इति तृतीयः ॥ तथा

गांधारः मध्यमस्याद्यां श्रुतिं गृहीत्वा त्रिश्रुतिः सन् विकृत इति चतुर्थः ॥ तथा स एव मध्यमस्य प्रथमद्वितीये श्रुती गृहीत्वा चतुश्श्रुतिः सन् विकृत इति पंचमः ॥ तथा मध्यमः स्वादिमांत्यश्रुत्योर्गांधारपंचमाभ्यां गृहीतयोः स्वोपांत्यश्रुतिस्थित्या च्युत इति विकृतः षष्ठः ॥ तथा स एव प्रथमद्वितीयश्रुत्योर्गांधारेण गृहीतयोः स्वांतिमश्रुतिस्थित्या अच्युत इति विकृतः सप्तमः ॥ तथा पंचमः मध्यमग्रामे स्वांतिमश्रुतौ धैवतेन गृहीतायां स्वोपांत्यश्रुतिस्थित्या त्रिश्रुतिः सन्विकृत इति अष्टमः ॥ तथा स एव मध्यमग्रामे मध्यमस्यांत्यां श्रुतिं गृहीत्वा चतुःश्रुतिः सन्नपि स्वोपांत्यश्रुतिस्थित्या विकृत इति नवमः ॥ तथा धैवतो मध्यमग्रामे पंचमस्यांत्यां श्रुतिं गृहीत्वा चतुःश्रुतिः सन् विकृत इति दशमः ॥ तथा निषादः षड्जस्याद्यां श्रुतिं गृहीत्वा त्रिश्रुतिः सन् विकृत एकादशः ॥ तथा स एव षड्जस्य प्रथमद्वितीये श्रुती गृहीत्वा चतुःश्रुतिः सन् विकृत इति द्वादशः ॥ तथा च निःशंकः "च्युतोऽच्युतो द्विधा षड्जो द्विश्रुतिर्विकृतो भवेदि" त्यारभ्य प्राप्नोति विकृतोऽविकृतो भेदौ द्वाविति द्वादश स्मृता इत्यंतेन॥एवं पूर्वे प्राचीनाः यान्द्वादश वदंति तत्रेत्युक्तेर्यानिति लभ्यते तत्र तु तेषु द्वादशसु मध्ये सप्तैव भिन्नाः स्युः सप्तैव विकृतान्विलक्षणत्वेन संभावयामीत्यर्थः ॥ ते यथा प्राचीनमते च्युतः षड्ज एकः त्रिश्रुतिर्गांधारो द्वितीयः॥ चतुःश्रुतिर्गांधारः तृतीयः च्युतो मध्यमश्चतुर्थः त्रिश्रुतिः पंचमः पंचमः ॥ त्रिश्रुतिर्निषादः सप्तमश्चेति ॥ अस्मिन्मते तु एत एव क्रमेण मृदुससाधारणांतरमृदुममृदुपकैशिकिकाकलीनामानो भवंति ॥ एवं सप्तानामेव भिन्नत्वे हेतुमाह पृथक् पृथक् ध्वनितः शुद्धषड्जादिभ्यः भिन्नभिन्नतया ध्वनेः प्रतीयमानत्वादित्यर्थः ॥ द्वादशसु अवशिष्टपंचके कंठोक्त्या भिन्नत्वं वारयति न पंचेति ॥ परंतु पंच भिन्नाः नेत्यर्थः ॥ ते यथा तन्मते ॥ अच्युतषड्जः चतुःश्रुतिर्ऋषभः अच्युतो मध्यमः मध्यमग्रामे मध्यमांत्यश्रुतिगृहीतचतुःश्रुतिः पंचमः तत्रैव चतुःश्रुतिर्धैवतश्चेति ॥ एषामभिन्नत्वे हेतुमाह ॥ यदिम इति ॥ यत् हेतोः इमे अनंतरोक्ताः समशुद्धषड्जादिभिस्तुल्यो ध्वनिर्येषां ते ॥ २५ ॥

**न पृथक् शुद्धसमाभ्यामच्युतसमकौ चतुःश्रुती च रिधौ ॥**
**शुद्धरिधाभ्यां विकृतस्त्रिश्रुतिपादपि चतुःश्रुतिपः ॥ २६ ॥**

अभिन्नत्वमेव स्पष्टयति ॥ न पृथगिति ॥ शुद्धौ यौ समौ षडजमध्यमौ ताभ्यां अच्युतौ च तौ समकौ षड्जमध्यकौ च तौ न पृथक् ॥ तन्मते तु योऽयमच्युतः षड्जो विकृतः स शुद्धषड्जेन सह स्वांत्यश्रुतिस्थतया तुल्य-ध्वनिरेव श्रूयत इत्यर्थः ॥ तथा अच्युतमध्यमो विकृतः स्वांत्यश्रुतिस्थतया शुद्धमध्यमेन तुल्यध्वनिरेव श्रूयत इत्यर्थः ॥ चपरं चतुःश्रुतिरिधौ शुद्धरि-धाभ्यां न पृथक् चतुःश्रुतिऋषभात्त्रिश्रुतेऋषभात् तथा चतुःश्रुतिधैवतात्त्रिश्रु-तेर्धैवताच्च स्वांत्यश्रुतिस्थत्वादेव न भिन्नध्वनिरित्यर्थः ॥ अपीत्यपरं विकृतः चतुःश्रुतिः पः पंचमः स विकृतादेव त्रिश्रुतिपात् त्रिश्रुतिपंचमात् न पृथक् मध्यमग्रामे तु चतुःश्रुतेः शुद्धपंचमापेक्षया विकृतस्यापि पंचमस्य त्रिश्रुतेर्वि-कृतादेव पंचमात् न भेदः स्वोपांत्यश्रुतिस्थत्वादुभयोरपीत्यर्थः ॥ यथा तथा-धारभूतश्रुतेरपराः पूर्वश्रुतयो न्यूनाधिकभावेन भेदे अकिंचित्करा इति भावः ॥ २६ ॥

**भिन्नो न चतुःश्रुतिधो निःशंकमतेऽपि कूटपुनरुक्तौ ॥**
**तल्लक्षणतो भेदेप्यमीषु पंचसु न लक्ष्ये भित् ॥ २७ ॥**

अस्मिन्नेव भावार्थे शार्ङ्गदेवस्यापि क्वचित्संमतिमाह ॥ भिन्नो नेति ॥ निः-शंकमते शार्ङ्गदेवमतेपि कूटानां कूटतानानां या पुनरुक्तिः तत्प्रतिपादको ग्रंथः तत्र चतुःश्रुतिर्यो धः मध्यमग्रामस्थधैवतः स भिन्नो न त्रिश्रुतेः षड्जग्राम-स्थधैवतः स भिन्नो न त्रिश्रुतेः षड्जग्रामस्थधैवताद्विलक्षणो नेति तस्यापि मतामित्यर्थः ॥ तद्यथा ॥ षड्जग्रामे पंचमः स्वांतिमश्रुतौ तिष्ठति मध्यमग्रामे तु स्वोपांतिमश्रुतौ ॥ तदा मध्यमग्रामे धैवतश्चतुःश्रुतिर्भवति षड्जग्रामे तु त्रिश्रुतिरेव एवं सति नोक्तं मध्यमग्रामे पौरवीनाम्न्यां धैवताद्यायां षष्ठ्यां मूर्छनायां शुद्धसांतरादिभेदभिन्नचतुर्विधे धनिसरिगमेति षट्स्वरा-

त्मके क्रमे साशीतिरष्टाविंशतिशती २८८० कूटतानानि ॥ तथा षड्जग्रामे उत्तरायताख्यायां धैवताद्यायामेव तृतीयमूर्छनायां पूर्ववच्चतुर्विधे धनिसरिगमेतिखाडवक्रमे पूर्वोक्तान्येव २८८० कूटतानानि भवंति ॥ तानि ग्रामद्वयभेदकं पंचमं विना सदृशाकाराणि इति पुनरुक्तानि एवं पंचस्वरादिक्रमेष्वन्यान्यपि भिन्नभिन्नसंख्यानि । ४८० । ४८ । १२ । ४ । १ ॥ मिलितानि तु ३४२५ पंचविंशत्याधिकचतुस्त्रिंशच्छतसंख्यानि पुनरुक्तानि इति तन्मतं ॥ अत्र यदि मध्यमग्रामे चतुःश्रुतिर्धैवतो भिन्नः षड्जग्रामे तु त्रिश्रुतिर्धैवतो भिन्न इति मन्येत तदा विसदृशतया पौनरुक्त्यं न घटेतेति भावः ॥ तथा च निःशंकभेदकं पंचमं विनेत्युपक्रम्य धैवतादेस्तु पौरव्याश्चत्वारः षट्स्वराः क्रमाः तत्तानानां तु साशीतिः शताष्टाविंशतिर्मता ॥ औडवानां चतुर्णां प्रागुक्ता संख्या चतुःस्वरौ ॥ त्रिस्वरौ द्विस्वरावेकस्वरः प्रागुक्तसंख्यकाः ॥ पंचविंशतिसंयुक्ता चतुस्त्रिंशच्छती त्वियं ॥ तानानां सदृशाकारा स्यात्तानैरौत्तरायतैरिति ॥ तस्मादाद्यश्रुतेर्न्यूनत्वे वा आधिक्ये वा स्वरांतरत्वं नेति ॥ स्थितम् ॥ अथ बहुसंमत्या भेदं अभ्युपगच्छन् स्वोक्तौ लक्ष्यं प्रमाणयन्नाह ॥ तल्लक्षणत इति ॥ अमीषु पंचसु अच्युतषड्जचतुःश्रुतिऋषभादिषु तल्लक्षणतः प्राचीनलक्षणात् भेदेपि सतीत्यर्थात् लक्ष्ये लोकप्रयुज्ये गाने भित् भेदो न ॥ यद्यपि शास्त्रे भेदः प्रतीयते तथापि प्रयोगे नेत्यर्थः ॥ भिदिति संपदादित्वाद्भावे क्विप् ॥ २७ ॥

**नैकश्रुतयोऽप्येते श्रवणार्हाः स्वचरमश्रुतावेव ॥**
**न त्वाद्यासु श्रुतिषु स्पष्टमिति विचित्रवीणातः ॥ २८ ॥**

तदेव स्पष्टयति ॥ नैकश्रुतयोपीति ॥ द्वित्रिचतुःश्रुतयोऽप्येते गांधारादिप्रकाराः स्वराः स्वा या चरमा अंत्या श्रुतिस्तस्यामेव श्रवणार्हाः श्रोतृभिः श्रूयंत इत्यर्थः ॥ नतु आद्यासु श्रुतिषु अंत्यायाः पूर्वासु श्रवणार्हाः द्विश्रुतिरपि गांधारः स्वद्वितीयश्रुतावेव श्रूयते न प्रथमायामपीत्यर्थः ॥ एवं ऋषभादयोपि॥ इति अंत्यश्रुतावेव स्वरावगमनं विचित्राः विविधाः या वीणाः ताभ्य इति

ततः स्पष्टं वैणिका ह्यनुमानेन तंत्रीषु सारीषु वा अंत्यश्रुतावेव स्वरं स्थापयंति ॥ तथैव श्रावयंति च ॥ न तु तत्र पूर्वश्रुतीनामपि प्रकाशने उपयोगः । गायनकंठेति तत्संवाद एवेतिभावः ॥ नैकेतिनिषेधनार्थनशब्दस्य सुप्सुपेतिसमासो नाकादिवत् ॥ २८ ॥

**रिधयोः परश्रुतिगतेश्चतस्र इह पंच षट् तथा श्रुतयः ॥**
**देशी रागेष्वभिवीक्ष्यंते न षट् तथा गमयोः ॥ २९ ॥**

अथ प्राचीनोक्तविकृतेभ्योऽन्यानपि विकृतान्संभावयन् आह ॥ रिधयोः परेत्यार्यया सार्धया ॥ इह एतेषु प्रसिद्धेषु देश्यां रुच्या जनहृदयरंजने गाने ये रागास्ते देशीरागाः तेषु रिधयोः ऋषभधैवतयोः चतस्रः पंच तथा षट् श्रुतयः अभिवीक्ष्यंते ॥ कथमित्याह ॥ परश्रुतिगतेः पराः याः श्रुतयः क्रमेण गमयोस्तथा निसयोश्च तासां गतिः प्राप्तिस्तस्या हेतोः ऋषभो गांधारस्यादिमां श्रुतिं गृहीत्वा चतुःश्रुतिः तस्यैव श्रुतिद्वयं गृहीत्वा पंचश्रुतिः तस्यादिमां गृहीत्वा षट्श्रुतिः एवं धैवतः निषादस्य प्रथमां द्वे च षड्जस्यादिमां च श्रुतिं गृहीत्वा चतुरादिश्रुतिकः संपद्यत इत्यर्थः ॥ तथेति चार्थे गमयोः गांधारमध्यमयोः ताः श्रुतयः षड्भिर्वीक्ष्यंते इत्येव ॥ परश्रुतिगतेरित्येव च ॥ गांधारो मध्यमस्य श्रुतिचतुष्टयं गृहीत्वा षट्श्रुतिः तथा मध्यमोपि पंचमस्यादिमश्रुतिद्वयं गृहीत्वा षट्श्रुतिरित्यर्थः ॥ तत्र श्रीरागादिषु रिधौ चतुःश्रुतिकौ मल्लार्यादिषु पंचश्रुतिकौ शुद्धनाट्यादिषु षट्श्रुतिकौ सारंगादिषु गः षट्श्रुतिकः शुद्धवराट्यादिषु मः षट्श्रुतिक इति ज्ञेयम् ॥ २९ ॥

**इति तेषु संभवंति त्रयोऽन्य एभ्यो विलक्षणा विकृताः ॥**
**पंचश्रुतिः शुचेर्गात्साधारणश्च षट्श्रुतिकः ॥ ३० ॥**
**रिर्न पृथक् तादृग्धो नेः कैशिकिनश्च षट्श्रुतेर्गोमात् ॥**
**किंतूक्तरिधगमानां व्यवहृतये पृथगिमाः संज्ञाः ॥ ३१ ॥**

इतीति ॥ इति हेतोस्तेषु स्वरेषु एभ्यः विकृतेभ्यः विलक्षणा विसदृशा अ-

न्ये त्रयो विकृताः संभवंति ॥ ननु उक्तरीत्या अष्टापि विकृता वक्तुं युक्तः न तु त्रय एवेत्याशंक्याह ॥ पंचश्रुतिरित्युत्तरार्धपूर्वार्धाभ्यां ॥ पंचश्रुतिः रिः ऋषभश्शुचेः शुद्धात् गात् गांधारात् ॥ षट्श्रुतिकश्च रिः साधारणतः साधारणाख्यविकृतगांधारात् क्रमेणेत्यर्थात् ॥ न पृथक् न भिन्नः स एव स इत्यर्थः ॥ चपरं तादृक् पंचश्रुतिः षट्श्रुतिश्च धः धैवतः नेः शुचेर्निषादात् कैशिकिनः तदाख्यविकृतनिषादाश्च क्रमेणेत्येव ॥ षट्श्रुतिर्गः गांधारः मात् शुचेर्मध्यमात् न पृथगित्येव ॥ शुचेरिति निमाभ्यामपि संबध्यते ॥ पंचश्रुतिको रिः गांधार एव षट्श्रुतिकश्च रिः साधारण एव ॥ तथा पंचश्रुतिर्धो निषाद एव ॥ षट्श्रुतिश्च धः कैशिक्येव ॥ तथा षट्श्रुतिर्गः मध्यम एव न स्वरांतरं ॥ तस्मात् अष्टसु त्रय एव भिन्नत्वे नावशिष्यंते इति भावः ॥ ननु तर्हि पंचश्रुतिषट्श्रुतिकरिधयोः तथा षट्श्रुतिगस्य किमर्थमिह सहोपन्यास इत्याशंक्य चतुरादिश्रुतिक्रमेण तेषामपि वक्ष्यमाणनामकरणार्थमिति प्रतिज्ञया आह ॥ किंतूक्तेति ॥ किंतु तथापि प्रयोजनमस्तीत्यर्थः ॥ तदेवाह ॥ उक्ताः चतुःश्रुत्यादिप्रकारा ये रिधगमाः तेषां व्यवहृतये लाघवेन शास्त्रव्यवहाराय पृथक् प्रत्येकं इमाः वक्ष्यमाणाः संज्ञाः संतीति शेषः ॥ ३० ॥ ३१ ॥

**तीव्रश्चतुःश्रुतित्वे पंचश्रुतिकत्व एव तीव्रतरः ॥**
**षट्श्रुतिकत्वे तीव्रतम इति परं ता यथायोग्यम् ॥ ३२ ॥**

ता एव श्रुतिवैशिष्ट्येनाह ॥ तीव्रश्चतुःश्रुतित्व इति ॥ एवेतिशब्दयोः संबंधः प्रत्येकं ॥ चतुःश्रुतित्व एव तीव्र इति रिधादीनां संज्ञेत्यर्थात् ॥ एवं पंचश्रुतिकत्वषट्श्रुतिकत्वयोरेव तीव्रतरस्तीव्रतम इति च संज्ञेयं ॥ एवं सति गमयोरपि संज्ञात्रये प्राप्ते आह ॥ परं ता इति ॥ परंतु ताः संज्ञाः यथायोग्यं यथार्हं गस्य मस्य च षट्श्रुतिकत्वे तीव्रतम इत्येकैव संज्ञा ॥ न तु तीव्रतीव्रतरसंज्ञे ॥ गस्य तु चतुःश्रुतिकत्वपंचश्रुतिकत्वयोः अंतरमृदुमसंज्ञयोः प्रवृत्तेः मस्य तु चतुःश्रुतिकत्वस्याव्यभिचारात् पंचश्रुतिकत्वस्य चासंभवादित्यर्थः ॥ ३२ ॥

**तादिति च शास्त्रविरोधि न वाद्याध्याये हि शार्ङ्गदेवेन ॥**
**लक्ष्यस्थित्यै प्रोक्तं शास्त्रार्थस्यान्यथात्वमपि ॥ ३३ ॥**

नल पूर्वोक्तं निगमानां समपतृतीयश्रुतिस्थत्वं रिधगमानां चतुरादिश्रुतिमत्त्वं च पुरातनानुक्तत्वात् शास्त्रांतरविरुद्धमित्यत आह—तदिति । तत्पूर्वोक्तं निगमानां समपतृतीयश्रुतिस्थत्वं इति च रिधगमानां चतुरादिश्रुतिमत्त्वं च शास्त्रविरोधि न कृतः ॥ हि यतः शार्ङ्गदेवेन वाद्याध्याये शास्त्राणां स्वोक्तपरोक्तानां योऽर्थः तस्य अन्यथात्वमपि लक्ष्यस्थित्यै लक्ष्यस्थापनाय प्रोक्तं ॥ शास्त्राणां लक्ष्यानुग्रहाय प्रवृत्तत्वात् यत्र तयोर्विरोधस्तत्र शास्त्रैर्नियमितस्याप्यर्थस्य उपलक्षणत्वादिना प्रकारांतरेणापि गतिः कर्तव्या न तु लक्ष्यमुपेक्ष्यमित्युक्तं तेन यथोक्तश्रुतिकानामपि स्वराणां श्रुत्यंतराक्रमणं न दोषायेति शास्त्र एवोक्तमित्यर्थः ॥ तथा च षष्ठाध्याये किन्नरीप्रकरणे निःशंकः ॥ यद्वा लक्ष्यप्रधानानि शास्त्राण्येतानि मन्वते ॥ तस्माल्लक्ष्यविरुद्धं यच्छास्त्रं ज्ञेयमन्यथा इत्यादि ॥ ३३ ॥

**षट्श्रुतिकं मं पंचश्रुतिकौ च चतुःश्रुती रिधावगदत् ॥**
**रागविवेकाध्यायव्याख्याने कल्लिनाथसूरिरपि ॥ ३४ ॥**

इदानीं रिधमाना यथायथं चतुरादिश्रुतिमत्वे साक्षात् संमत्यंतरमाह—षट्श्रुतिकं ममिति ॥ कल्लिनाथः एतदाख्यः संगीतरत्नाकरव्याख्याता सोपि रागविवेकाध्यायव्याख्याने तद्द्वितीयाध्यायस्य विवरणे मं षट्श्रुतिकं रिधौ पंचश्रुतिकौ चतुःश्रुती च अगदत् ॥ उपलक्षणत्वेनोक्तवान् ॥ तथा च लक्ष्ये प्रतीतानां लक्षणविरोधानां परिहारस्य प्रसंगे कल्लिनाथः ॥ क्रियांगरामक्रियायां मध्यमस्य पंचमश्रुतिद्वयाक्रमणं नटदेवक्रीप्रभृतिषुऋषभधैवतयोरंतरकाकल्यादिमश्रुतिद्वयाक्रमणेन प्रत्येकं पंचश्रुतिता च शास्त्रानभिहिता ॥ श्रीरागे गांधारनिषादयोः मध्यमषड्जादिमैकैकश्रुत्याश्रयणेन त्रिश्रुतित्वे शास्त्रविहितेपि षड्जमध्यमयोरशास्त्रविहितत्रिश्रुतित्वकरणेन कैशिकयोरर्धवैशस्यं ॥ तत्रैव

ऋषभधैवतयोर्गांधारानिषादादिमश्रुत्याक्रमणेन प्रत्येकं चतुःश्रुतित्वं च शास्त्रा-विहितमित्यादि लक्ष्यलक्षणयोर्बहुधा विरोधा इति ग्रंथेन विरोधानुद्भाव्य परि-हारमाह देशीत्वादेतेषामनियमो न दोषायेति देशीत्वं च तत्तद्देशमनोरंजनैक-फलत्वेन कामचारप्रवर्तित्वमित्यादिना ॥ ३४ ॥

**ग्रामश्रुतिस्वरादेरनियम उक्तो हनूमताऽऽद्येन ॥**
**देशीरागे येषां श्रुतिस्वरेत्यादिपद्येन ॥ ३५ ॥**

इदानीं प्रसंगेन उक्तवक्ष्यमाणनानाविधलक्ष्यलक्षणदोषपरिहाराय मतंग-निःशंकादिसंमतस्य श्रीहनूमतः संमतिमाह—**ग्रामश्रुतीति** ॥ आद्येन सर्वमूल-भूतेन हनूमता देशीरागे जातित्वादेकवचनं देशीरागेषु ग्रामश्रुतिस्वरादेरनियम उक्तः ॥ ग्रामौ षड्जग्राममध्यमग्रामौ ॥ श्रुतयः षड्जादिषु नियताश्चतुरादयः स्वराः शुद्धविकृतलक्षणाः ते आदयो यस्येति तस्य अर्थजातस्येति शेषः ॥ आदिशब्देन खाडवौडवसंपूर्णत्वानि ग्रहांशादिजातयः ॥ आलापकरणादीनि ॥ अन्यान्यपि तेषां यथेष्टतेत्यर्थः ॥ केन करणेन ॥ येषां श्रुतिस्वरेत्यादि यत्पद्यं श्लोकस्तेनेत्यर्थः ॥ तथा च स एव ॥ येषां श्रुतिस्वरग्रामजात्यादिनियमो न हि ॥ नानादेशगतिछाया देशीरागास्तु ते स्मृताः इति ॥ ३५ ॥

**ते मंद्रमध्यतारस्थानस्थित्या त्रिधा पुनस्तेषाम् ॥**
**वादी संवादी च विवाद्यनुवादीति भेदाः स्युः ॥ ३६ ॥**

एवं यथोक्तश्रुतिकल्पनया स्वराणां शुद्धत्वविकृतत्वे अभिधाय द्विविधाना-मपि तेषां स्थापनभेदेन त्रैविध्यमाह—**ते मंद्रेति** ॥ ते द्विविधा अपि स्वराः मंद्रमध्यताराणां नादानां यानि स्थानानि हृत्कंठमूर्धरूपाणि तेषु या स्थिति-स्तया हेतुना त्रिविधाः ॥ उच्चोच्चतरोच्चतमस्थानस्थितपुरुषवत् तेषां स्थानकृत एव भेदः न तु स्वरूपकृत इत्यर्थः ॥ अथ ताद्दग्विधानामपि स्वराणां रागप्र-योगार्थं प्रकारांतरेण चातुर्विध्यमाह—**पुनस्तेषामिति** ॥ पुनः प्रकारांतरेण वा-

दी संवादी विवादी अनुवादी च इति भेदाः स्युः ॥ ३६ ॥

**वादी स यः प्रयोगे बहुलो राजा ययोस्तु मध्ये स्युः ॥**
**द्वादश वाऽष्टौ श्रुतयोऽमात्यौ संवादिनौ तौ स्तः ॥ ३७ ॥**

तानेव लक्षणत आर्याद्वयेनाऽऽह ॥ तत्रापि वादिनं लक्षयति—**वादी स य** इति ॥ यः प्रयोगे रागादौ बहुलो ग्रहांशत्वादिना पुनः पुनरावर्तनान्मुख्यः ॥ स वदनाद्रागप्रतिपादकत्वाद्वादी ॥ कीदृक् सः राजा नृपवन्मुख्य इत्यर्थः ॥ सिंहो माणवक इतिवच्चेत्यर्थः परत्र शब्दप्रयोगात् ॥ एवमग्रेपि ॥ संवादिनं लक्षयति—**ययोस्त्विति** ॥ ययोस्तु मध्येंऽतरे द्वादश । वाऽथवा । अष्टौ श्रुतयः स्युर्भवेयुः ॥ तौ मिथः परस्परं संवादनाद्वादिना स्वरेण जनितस्वरागरंजकत्वस्य निर्वाहकत्वात्संवादिनौ स्तः ॥ कीदृशौ तौ ॥ अमात्यौ सचिववद्राजारब्धकार्यनिर्वाहकावित्यर्थः ॥ मिथ इति पुरःस्थितमपि इहापि ज्ञेयम् ॥ द्वादशाष्टश्रुत्यंतरत्वेऽपि समश्रुतिकयोरेव संवादित्वं ज्ञेयम् ॥ तथा च मतंगः ॥ संवादिनस्तु पुनः समश्रुतिकत्वे सति त्रयोदशनवांतरितत्वेनान्योन्यं बोद्धव्याः ॥ तन्मते स्वराधारश्रुतेरपि गणनेति न विरोधः ॥ तत्र संवादित्वं यथा ॥ षड्जस्य मध्यमपंचमौ ॥ ऋषभस्य धैवतः ॥ गांधारस्य निषादः ॥ मध्यमस्य षड्जः ॥ पंचमस्यापि षड्जः ॥ धैवतस्य ऋषभः ॥ निषादस्य गांधारः ॥ तेन यत्र रागे षड्जोंऽशस्तत्र मध्यमपंचमयोरप्यंशत्वेन कल्पितयो रागहानिर्न स्यादिति भावः ॥ एवं सर्वेषु ॥ ३७ ॥

**एकश्रुत्यंतरितौ विवादिनौ वैरिणौ मिथो भवतः ॥**
**अनुवादिनस्तु शेषा भृत्या इत्थं यथार्थास्ते ॥ ३८ ॥**

विवादिनं लक्षयति—**एकश्रुत्यंतरिताविति** ॥ यौ ताविति शेषः ॥ एकया श्रुत्यांऽतरितौ व्यवहितौ यौ तौ मिथो विवदनाद्वापि संवाद्यनुवादिजनितरागरक्तिविनाशकत्वात् विवादिनौ भवतः ॥ कीदृशौ तौ वैरिणौ ॥ शत्रुवत् आर-

ऽधकृत्यविनाशकावित्यर्थः ॥ विवादित्वं यथा ॥ ऋषभस्य गांधारः ॥ गांधारस्य ऋषभः ॥ धैवतस्य निषादः ॥ निषादस्य धैवतः ॥ तेन ऋषभस्थाने गांधारः प्रयुज्यमानो रागहानिकर इति भावः ॥ एवं परत्र ॥ अनुवादिनं लक्षयति— **अनुवादिनस्त्विति** ॥ शेषा येषां संवादित्वं विवादित्वं च नास्ति त इत्यर्थः ॥ मिथः अनुवदनात् वादसंवादिसंपादितरक्त्यनुकूलत्वात् अनुवादिनः स्युरिति शेषः ॥ कीदृशास्ते ॥ भृत्याः सेवकवत् राजविचारारऽधकर्मानुगुणा इत्यर्थः ॥ अनुवादित्वं यथा ॥ षड्जस्य रिगधनयः ॥ ऋषभस्य समपनयः ॥ गांधारस्य समपधाः ॥ मध्यमस्य रिगपधनयः ॥ पंचमस्य रिगमधनयः ॥ धैवतस्य सगमपाः ॥ निषादस्य सरिमपाः ॥ तेन षड्जस्थाने रिगधनिष्वपि प्रयुज्यमानेषु किंचित् रक्तिकरत्वमेवेति भावः ॥ एवं सार्थकतया सूचितान् वाद्यादीन् स्पष्टोक्त्या सार्थकान् निगमयति—**इत्थमिति** ॥ ते वादिसंवादिविवाद्यनुवादिन इत्थं नृपादिदृष्टांतेन यथार्थाः सार्थका इत्यर्थः ॥ अत्र शुद्धवाद्यादिपरिज्ञानाय वीणायां श्रुतिप्रस्तारो यथा ॥ एवं तिर्यग्रेखाद्वाविंशतिं लिखेत् ॥ तासु वामतो वा दक्षिणतो वा रेखाग्राणि द्वाविंशतिर्भवंति ॥ तत्र षड्जादीन् स्वस्वश्रुतिसंख्यया विलिख्य अंतरश्रुतयो वेदितव्याः ॥ एवं विकृतेष्वप्यूह्यम् ॥ ३८ ॥

**स्वरनिकरो ग्रामः स्यादाधारो मूर्छनाक्रमादीनाम् ॥**
**षाड्जो माध्यम इति च द्वेधा स तयोः प्रधानत्वात् ॥ ३९ ॥**
***धत्ते रिमयोरंत्यादिमे श्रुती गो निरप्यमू धसयोः ॥**
**धः पांत्वाचेद्गांधारग्रामः स्वर्गलोकेऽन्यः ॥ ४० ॥**

एवं स्वरान् निरूप्य नियतस्वरसंनिवेशरूपान् मूर्छनादीन् निरूपयिष्यन् तदाश्रयत्वात् ग्रामयोः प्रसक्तयोः ग्रामसामान्यलक्षणं प्रथममाह—**स्वरनिकर इति** ॥ स्वराणां यो निकरः समूहः स ग्रामः स्यात् ॥ यथा जनसमूहो ग्रामो

---

* श्लोकस्यास्योभयोरप्युपलब्धपुस्तकयोर्न विद्यते टीका ।

लोके एवमत्र स्वरसमूह इत्यर्थः ॥ एतावत्येवोक्ते वेदवाक्येऽपि स्वरसमूहस्य सत्त्वात् तत्रातिव्याप्तिरिति तन्निवृत्तय आह ॥ कीदृक्सः—**आधार इति** ॥ मूर्छना च क्रमादयश्चेति तेषां आश्रय इत्यर्थः ॥ आदिपदेन तावर्णालंकारादयः॥ एवं सामान्येनोक्त्वा तद्वैविध्यमाह--**षाड्ज इति** ॥ स ग्रामः षाड्जः षड्जस्य संबंधी षड्जग्राम इत्यर्थः ॥ चपरं माध्यमः मध्यमस्य संबंधी मध्यमग्राम इत्यर्थः ॥ इति द्वेधा ॥ द्वैविध्ये एव हेतुमाह ॥ तयोः षड्जमध्यमयोः प्रधानत्वात् ॥ तत्र षड्जस्य सप्तस्वरमुख्यत्वं सर्वाद्यत्वात् संवाद्याधिक्याच्च मध्यमस्य तु तथात्वं शुद्धतानेष्वविलोपित्वात् इति तु ग्रंथांतरतो ज्ञेयं ॥ षाड्ज इत्यादि तस्येदमिति संबंधेन ॥ ३९ ॥ ४० ॥

**स्वांत्यश्रुतावुपांत्यश्रुतौ च सति पंचमे क्रमात्स स्यात् ॥**
**किंतु विकारो देश्यां न पंचमे तदिह सः प्रथमः ॥ ४१ ॥**

द्विविधं तं क्रमाल्लक्षयति—**स्वांत्यश्रुताविति** ॥ पंचमे स्वस्य या अंत्या चतुर्थी श्रुतिस्तस्यां सति चपरं उपांत्या तृतीया या श्रुतिः स्वस्येति शेषः । तस्यां सति सः षाड्जो माध्यम इति द्विविधोऽपि ग्रामः क्रमात्स्यात् ॥ तत्र स्वरसमूहांतरगते पंचमे स्वचतुर्थ्यां श्रुतौ आदितस्तु सप्तदश्यां तिष्ठति षड्जग्राम इत्यर्थः ॥ तथा पंचम एव स्वस्य तृतीयायां श्रुतौ आदितः षोडश्यां तिष्ठति मध्यमग्राम इत्यर्थः ॥ एवं ग्रामौ लक्षयित्वा तयोरपि षड्जग्रामप्रचारमेव देश्यां सहेतुकमाह—**किंत्विति** ॥ किंतु परंतु तद्धेतोः इह देश्यां प्रथमः स ग्रामः षड्जग्रामः वर्तत इति शेषः ॥ तत्कुतः ॥ देश्यां पंचमे विकारः स्वचतुर्थश्रुतेश्च्यवनं न ग्रंथांतरोक्तं तत्तद्ग्रामरागेषु अन्येष्वपि रागेषु पंचमस्य एकरूपत्वादित्यर्थः ॥ तथा च हनूमता देश्यामुक्तो ग्रामयोरनियमः येषां स्वरश्रुतीत्यादिपद्येन॥ किंच रागविवेकाध्यायव्याख्याने कल्लिनाथोऽपि लक्ष्यलक्षणविरोधपरिहारप्रसंगत उक्तवान् ॥ त्रिचतुःश्रुतिकत्वेन ग्रामद्वयभेदकस्यापि पंचमस्यागोप्यत्वेन प्रयुज्यमानस्यापि सर्वरागेष्वेकरूपतेत्यादिना ॥ ४१ ॥

स्वरसप्तकस्य सक्रममारोहश्चावरोहणं यदिह ॥
सा मूर्छना भिदोऽस्या उत्तरमंद्रादिकाः सप्त ॥ ४२ ॥

एवं ग्रामं लक्षयित्वा तदाधेयेषु मूर्छनां तावत्सामान्यतो लक्षयति—**स्वरसप्तकस्येति** ॥ इह ग्रामे यत्स्वरसप्तकस्य सक्रमं अनुक्रमसहितं आरोहः अवरोहणं च सा मूर्च्छ्यते मोह्यते यया श्रोता इति मूर्छना ज्ञेया इति शेषः ॥ सक्रममित्युक्तेः कूटताने नातिव्याप्तिः सप्तकेत्युक्तेः शुद्धतानव्यावृत्तिः ॥ आरोहश्चावरोहणमित्युक्तिभ्यां आरोह्यवरोहिद्विविधवर्णालंकारानिवृत्तिः सक्रमं यत् इत्युभयत्र सक्रमं च यश्च यच्चेति नपुंसकमनपुंसकेनेति नपुंसकशेष एकवत्त्वं च सा इति प्रतिनिर्दिश्यमानमूर्छनाया लिंगं ॥ मूर्छनेति मूर्छामोहसमुच्छ्राययोरस्मात् ण्यंतात् ण्यासश्रंथेषु युच् ॥ अथ तस्या विशेषान् नामतः संख्यापूर्वं दर्शयति—**भिदोस्या इति** ॥ अस्या मूर्छनायाः भिदः भेदाः उत्तरमंद्रा आदिर्यासामिति ताः सप्त भवंतीति शेषः ॥ ४२ ॥

मध्यस्थसादिराद्याधःस्थन्याद्यादिकाः पराः षट् च ॥
क्रम आरोहणमेषां खाडवमिह षट्स्वरं किमपि ॥ ४३ ॥

सप्तापि विशेषान् लक्षयति—**मध्यस्थसादिरिति** ॥ मध्यस्थः मध्यस्थानस्थो यः सः षड्जः स आदिर्यस्याः सा आद्या प्रथमा भवतीति शेषः ॥ चपरं अधस्थाः तस्मात् षड्जात् नीचस्थाः मंद्रस्था इति यावत् ॥ ये न्यादयः निषादादयः ते आदयो यासां ता इति अधःस्थनाद्यादिकः पराः अन्याः षट् रंजन्यादयः तेन सरिगमपधनि, निधपमगरिसेति उत्तरमंद्रा ॥ निसरिगमपध, धपमगरिसनि इति रंजनी ॥ धनिसरिगमप, पगरिसनिधेति उत्तरायता ॥ पधनिसरिगममगरिसनिधपेति शुद्धषड्जा ॥ मपधनिसरिग, गरिसनिधपमेति मत्सरीकृता ॥ गमपधनिसरि, रिसनिधपमगेति अश्वक्रांता ॥ रिगमपधनिस, सनिधपमगरि इति अभिरुद्गता ॥ अथ ग्रामस्य आधेयांतरं क्रमं लक्षयति—**क्रम इति** ॥ एषां स्वराणां आरोहणं क्रमः॥ न त्ववरोहणमित्यर्थोज्ज्ञेयं ॥ स-

रिगमपधनि इत्येवं सः ॥ अत्र स्वरसप्तकस्येति न नियमः ॥ अत एव तस्मिन् प्रकृतेपि एषामिति पुनरुक्तं ॥ क्रमभेदाः शास्त्रांतराज्ज्ञेयाः ॥ इदानीं आधेयांतराणि शुद्धतानान् लक्षयिष्यन् तदुपयोगितया खाडवौडवे तावल्लक्षयति— **खाडवामिहेति** ॥ इह शास्त्रे यत् षट् स्वरा यस्मिन् तत् किमपि मूर्छनादि तत्खाडवं ॥ यत्तदोरध्याहारः ॥ ४३ ॥

**पंचस्वरं तथौडवमथ शुद्धा एव मूर्छना यर्हि ॥**
**खाडविताश्चौडविताः शुद्धास्ताना नवांबुधयः ॥ ४४ ॥**

तथा पंचस्वरं तदेव औडवं ॥ खाडवौडवेति पूर्वाचार्यकृते संज्ञे ॥ शुद्धतानान् लक्षयति—**अथ शुद्धा इति** ॥ अथातःपरं शुद्धाः स्वरविकाररहिता एव मूर्छना यर्हि यदि खाडविताः षट्स्वरात्मिकाः कृताः चपरं औडविताः पंचस्वरात्मिकाः कृताः तर्हि सार्थं शुद्धाः तानाः स्युरिति शेषः ॥ शुद्धा एव मूर्छना इति वदता शास्त्रांतरोक्तं शुद्धसांतरसकाकलीकसांतरकाकलिकतया मूर्छनानां चातुर्विध्यं सूचितं ॥ यद्यपि मूर्छना एव शुद्धास्तानाः स्युरित्युक्तेः तानेषु आरोहावरोहरूपत्वं प्रतीयते तथापि मतंगमतेन आरोह एव तान इति ज्ञेयं ॥ तथा च मतंगः ॥ ननु कथं मूर्छनातानयोर्भेदः ॥ उच्यते ॥ आरोहावरोहक्रमयुक्तः स्वरसमुदायो मूर्छनेत्युच्यते ॥ तानस्तु आरोहणं भवतीति भेद इति ॥ तान् संख्याति नवांबुधयः ४९ एकोनपंचाशत् तत्र क्रमात् षड्जग्रामे षड्जर्षभपंचमनिषादविहीनाः अष्टाविंशतिः रिगमपधनीत्यादयः खाडवाः शुद्धतानाः॥ तथा षड्जपंचम्याभ्यां गांधारनिषादाभ्यां ऋषभपंचमाभ्यां च क्रमात् विहीनाः एकविंशतिः रिगमधनीत्यादय औडवाः मिलितास्तु एकोनपंचाशत् इति प्राचीनमतं ॥ तथा च निःशंकः ॥ षड्जगाः सप्तहीनाश्चेत्क्रमात्सरिपसप्तमैः ॥ सदाष्टाविंशतिस्ताना मध्यमे सरिगमोज्झिताः ॥ सपाभ्यां द्विश्रुतिभ्यां च रिपाभ्यां सप्त वर्जिताः ॥ षड्जग्रामे पृथक्ताना एकविंशतिरौडवा इति ॥ खाडविता इति तत्करोतीति ण्यंतान्निष्ठा ॥ ४४ ॥

पूर्णाश्चापूर्णाश्च व्युत्क्रमणोच्चारितस्वरा विविधाः ॥
चेन्मूर्छनास्तु कूटास्तानाः संख्याऽथ पूर्णानाम् ॥ ४५ ॥

खनिगमखशरा ५०४० एकैकस्वरविमुचां क्रमाच्च नखगिरयः ७२०॥
खार्का १२० जिना २४ रसा ६ द्वौ २ भू १ रिति तत्तत्क्रमैर्युक्ताः ॥ ४६ ॥

एवं शुद्धतानान्निरूप्य तद्विलक्षणान्कूटतानानाह—**पूर्णाश्चेति** ॥ पूर्णाः सप्त स्वराः अपूर्णाश्च एकैकांत्यस्वरत्यागे सति षट्स्वराद्येकस्वरांताश्च मूर्छनास्तु मूर्छना एव व्युत्क्रमणेन एकादिस्वरव्यत्यासेन उच्चारिताः स्वराः यासां तथाविधाश्चेत् तर्हि कूटास्तानाः स्युरिति शेषः ॥ द्वौ चौ परस्परविकल्पे ॥ किं शुद्धा एव नेत्याह ॥ विविधाः ग्रंथांतरोक्तचातुर्विध्याः ॥ यद्वा उत्तरमंद्रादिनाम्न्यः ॥ अथ सप्तस्वरादिसप्तविधानां कूटतानानां संख्यां प्रतिज्ञापूर्वं कथयति—**संख्याऽथेति** ॥ अथ संख्या कथ्यत इति शेषः ॥ पूर्णादिक्रमेण तामेवाह—**पूर्णानां खनिगमखशरा इति**॥ पंचसहस्राणि चत्वारिंशच्च ॥ एकैकस्वरं विमुंचति त्यजंति तेषां एकैकस्वरविमुचां च क्रमादियं संख्या भवतीति शेषः ॥ तत्र षट्स्वराणां संख्या नखगिरयः सप्तशतानि विंशतिश्च ॥ पंचस्वराणां खार्काः विंशत्यधिकं शतं ॥ चतुः स्वराणां जिनाः चतुर्विंशतिः ॥ त्रिस्वराणां रसाः षट् ॥ द्विस्वराणां द्वौ ॥ एकस्वराणां भूरिति एक इति ॥ इयं च संख्या प्रतिमूर्छनं ज्ञेया ॥ षड्जग्रामे मिलिता तु सर्वा शुद्धसप्तविधसप्तमूर्छनाकूटतानसंख्या ४१३९९ ॥ ननु इयं पूर्णादिकूटतानानां संख्या किं व्यत्यस्तस्वरूपाणामेव तेषां नेत्याह—**तत्तत्क्रमैर्युक्तेति** ॥ कीदृशी संख्या ते ते ये क्रमाः सप्तस्वराद्येकस्वरांताः सप्त तैर्युक्ता सहिता क्रमाणामगणने तु प्रत्येकं एकैको नेत्यर्थः ॥ परंतु क्रमाणामकूटतानत्वेपि इहोपादानं वक्ष्यमाणप्रस्तारादिसिद्धये ॥ विमुचामिति क्विबंतं ॥ ४५ ॥ ४६ ॥

एकादिकसप्तांतेषूर्ध्वोर्ध्वांकेषु पूर्वपूर्वहते ॥
परपर एकादिकसंख्या स्यात्प्रमतारपथ कथये ॥ ४७ ॥

एवं कूटतानानां बहुत्वात्प्रत्येकोच्चारणेन तत्स्वरूपप्रतिपादनं दुःसंपादमिति लाघवेन तज्ज्ञानोपायान् विवक्षुः तेषु सप्तस्वराद्येकस्वरांतसंख्यानां ज्ञानोपायं वैपरीत्येनाह—**एकादिकेति** ॥ एकः आदिरेषां ते च ते सप्त अंते येषां तेषु-ऊर्ध्वोर्ध्वाः उपरि उपरि स्थापिताः ये अंकाः तेषु मध्ये परे परे अग्रिमे अंके पूर्वपूर्वहते आद्येनाद्येन गुणिते सति एकादिका संख्या स्यात् ॥ तद्यथा १ २।३।४।५।६।७ एवं ऊर्ध्वोर्ध्वस्थितेषु एकादिषु ॥ एकेनाद्येन परे द्व्यंके गुणिते द्वावेव एकेन गुणिते तदेव भवतीति न्यायात् तेनाद्येन द्व्यंकेन परे त्र्यंके गुणिते षड्भवंति ॥ एवमेव षडंकेन चतुरंके गुणिते चतुर्विंशतिः स्यात् ॥ तया च पंचांके गुणिते विंशत्युत्तरं शतं ॥ तेन च षडंके गुणिते सप्तशतानि विंशत्युत्तराणि स्युः ॥ तैश्चाद्यैः परे सप्तांके गुणिते पंचसहस्राणि चत्वारिंश-दुत्तराणि संपद्यंते ॥ एषैवैकस्वरादिसंख्या पूर्वोक्ता ॥ अथ प्रस्तारं वक्तुं प्रति-जानीते—**प्रस्तारमथ कथय इति** ॥ प्रस्तारो नाम प्रथमद्वितीयतृतीयादिभेदानां आ तत्तत्संख्यासमाप्तेः क्रमेण स्थापनम् ॥ ४७ ॥

**न्यस्य क्रमं यथेष्टं पूर्वः पूर्वः परादधः स्थाप्यः ॥**
**पूर्वो यद्युपरि स्यात्तत्पूर्वः पुर उपरिगाः ॥ ४८ ॥**

**न्यस्य क्रममिति** ॥ यथेष्टं एकस्वरादिसप्तस्वरांतेषु क्रमेषु मध्ये यं कंचित् क्रमं न्यस्य ॥ स । सरि । सरिगेत्याद्यारोहात्मकं प्रथमपंक्तिरूपेण लिखित्वा पूर्वः पूर्वः परात् अधः स्थाप्यः अत्र परपूर्वत्वे क्रमापेक्षया ज्ञेये ॥ इह पूर्वः पूर्वः इति वीप्सा आ प्रस्तारसमाप्तेः प्रतिस्थानं सकृत्करणबुद्ध्या ज्ञेया न तु एककूटतानाविषया ॥ तेन एकवारमेव द्वितीयादिषु पंक्तिषु पूर्वः स्वरः पराद-धो लेख्यः ॥ तत्र विशेषमाह—**पूर्वो यदीति** ॥ पूर्वो यदि उपरि स्यात् त-त्तर्हि तत्पूर्वः स्थाप्य इति शेषः। लिखितुमारब्धः पूर्वः चेत् ऊर्ध्वपंक्तौ अग्रे दृ-श्यते तर्हि तस्मात्पूर्वात् यः पूर्वः स परादधो लेख्यः पूर्वपूर्वोऽप्यग्रे चेत् तर्हि ततोपि पूर्व एवं षड्जपर्यंतं विचार्यं ॥ षड्जपर्यंता अपि पुरस्तात् चेत्स्युः तर्हि द्वितीयस्वरादधश्चिंतनीयं तत्रापि षड्जपर्यंता अग्रे संति चेत्तर्हि तदग्रिमस्वरा-

धोलेखनमित्यर्थः ॥ एवं विचार्य पूर्वस्मिन् लिखिते तत्परं कर्तव्यमाह—**पुर उपरिगा इति** ॥ उपरिगाः लिखितस्य यः ऊर्ध्वः तदपेक्षया ये अग्रे स्युः ते पुरः पूर्वलिखितस्याग्रे स्थाप्या इत्यर्थः ॥ ४८ ॥

**मूलक्रमक्रमेण स्थाप्याः पृष्ठेस्य ये ततः शेषः ॥**
**अथ नष्टस्पष्टनामिह लेख्या इत्थं क्रमस्थांकाः ॥ ४९ ॥**

शेषाणां तु लेखनं पूर्वमिव तस्य पश्चाद्भाग इत्याह—**मूलक्रमेति** ॥ ये ततः शेषाः स्थापितेभ्योवशिष्टाः ते इत्यर्थात् अस्य पूर्वलिखितस्य पृष्ठे स्थाप्याः॥ कथं ॥ मूलक्रमक्रमेण ॥ मूलक्रमे षड्जादिके यः क्रमः व्यवहितत्वेन अव्यवहितत्वेन वा परिपाटी तया ॥ एवं प्रस्तारः ॥ तत्र निदर्शनाय चतुःस्वरप्रस्तारः प्रदर्श्यते ॥ सरिगमेति पूर्वं क्रमः स्थाप्यः तत्र षड्जस्याधः पूर्वस्वराभावात् स्वरो न स्थाप्यते ॥ ऋषभस्य तु अधः तत्पूर्वः षड्जः स्थाप्यते उपरिगतौ गांधारमध्यमौ पुरो लेख्यौ ॥ अवशिष्ट ऋषभः षड्जस्य पश्चाद्देयः ॥ एवं रिसगमेति क्रमेण सहितो द्वितीयो भेदः तं विना तु प्रथम एव ॥ तत्र ऋषभस्य पूर्वं षड्जो देयश्चेत्तर्हि स उपरि वर्तते ॥ षड्जस्य पूर्वो नेति तौ हित्वा गांधारस्याधः रिः पुरो मः पश्चात् सगौ मूलक्रमे व्यवहितक्रमेण ॥ एवं सगरिमेति तृतीयो भेदः ॥ ततो गांधारस्याधः पूर्वं ऋषभो देयत्वेन प्राप्तः ॥ परंतु पुरस्तात् स विद्यते इति तस्यापि पूर्वः षड्जो लिख्यते ॥ पुरोरिमौ पश्चात् गः ॥ एवं ग सरिमेति चतुर्थो भेदः ॥ ततो गांधारस्य यः पूर्वः तत्पूर्वश्चाग्रे वर्तत इति गं विहाय पूर्वासंभवात् सं च विहाय रेः अधः पूर्वं सः पुरो म पश्चात् रिगौ ॥ मूलक्रमे अव्यवहितक्रमेण एवं रिगसमेति पंचमः ॥ ततः पूर्वरीत्या गांधारस्यैव अधः रिः पुरः समौ पश्चाद्गः एवं गरिसमेति षष्ठः ॥ इति मांताः षड्भेदाः ॥ ततः पूर्वरीत्या मस्यैवाधस्तात् गः ॥ तदुपरिगतस्वराभावात्पश्चादेव सरिमाः ॥ एवं सरिमगेति सप्तमः ॥ ततो रेः अधः सः पुरो मगौ पश्चाद्रिः ॥ एवं रिसमगेति अष्टमः ॥ ततो मस्यैवाधो रिः पुरो गः पश्चात्समौ ॥ एवं समरिगेति नवमः ॥ ततो मस्याधः पूर्वपूर्वपूर्वः षड्ज एव पुरो रिगौ पश्चा-

न्मः ॥ एवं मसरिगेति दशमः ॥ ततः पूर्वरीत्या मसौ विहाय रेरेवाधः पूर्वः सः पुरो गः पश्चाद्रिमौ एवं रिमसगेति एकादशः ॥ ततः पूर्वरीत्या रिं त्यक्त्वा मस्यैवाधः पूर्वपूर्वो रिः पुरः सगौ पश्चान्मः एवं मरिसगेति द्वादशः ॥ इति गांताः षड्भेदाः ॥ ततः पूर्वरीत्या मरिसान् हित्वा गस्याधो रिः सगमा एव पश्चात् एवं सगमरीति त्रयोदशः। इत्यादयो ऱ्यंताः षड्भेदाः॥ ततः परे- सांताः षड्भेदाः ॥ मिलिताश्चतुर्विंशतिर्भेदाः ॥ मगरिसेत्यंताः ॥ ततःपरं प्रस्तारो न संभवति ॥ सर्वेषां पूर्वे उपरि संतीति एवमेव पंचस्वरादिषु प्रस्तारः॥ तत्र सरिगमपेति पंचस्वरप्रस्तारे पांताश्चतुर्विंशतिर्भेदाः ॥ ततो मांता अपि चतुर्विंशतिः ॥ ततः गांता अपि चतुर्विंशतिः ॥ ततो ऱ्यंताश्चतुर्विंशतिः ॥ ततः सांताश्चतुर्विंशतिः ॥ मिलितास्तु विंशत्युत्तरं शतं भेदाः ॥ पमगरिसेत्यंताः भवंति ॥ सरिगमपधेति षट्स्वरप्रस्तारे तु धांताः विंशत्युत्तरं शतं भेदाः॥ ततः पांतास्तावंत एव ॥ ततो मांतास्तावंत एव ॥ ततो गांतास्तावंत एव । ततो ऱ्यंतास्तावंत एव ॥ ततः सांतास्तावंत एव ॥ मिलितास्तु विंशत्युत्तराणि सप्तशतानि भेदाः धपमगरिसेत्यंताः भवंति ॥ सरिगमपधनीति सप्तस्वरप्रस्तारे तु विंशत्युत्तराणि सप्तशतानि न्यंता भेदाः ॥ ततस्तावंत एव धांताः ॥ ततस्तावंत एव पांताः ॥ ततस्तावंत एव मांताः ॥ ततस्तावंत एव गांताः॥ ततस्तावंत एव ऱ्यंताः ॥ ततस्तावंत एव सांताः ॥ मिलितास्तु पंचसहस्राणि चत्वारिंशदुत्तराणि भेदाः ॥ निधपमगरिसेत्यंता भवंति ॥ एवं रंजन्यादिषण्मूर्छनाक्रमाणां पूर्णानामपूर्णानां च प्रस्तारो ज्ञेयः ॥ इति प्रस्तारः ॥ एवं प्रस्तारमुक्त्वा प्रस्तारकरणेपि अशक्तस्य लघुनोपायेन तत्तद्भेदपरिज्ञानाय नष्टोद्दिष्टे स्पष्टयिष्यन् तावत् नष्टस्पष्टनं प्रतिजानाति—**अथ नष्टस्पष्टनमिति** ॥ एतावतिथ इति संख्याविशेषं उक्त्वा कीदृक्स्वरूप इति स्वरूपं विषयीकृत्य यो भेदः पृच्छ्यते सः अप्रतीयमानत्वान्नष्ट इति उच्यते ॥ तस्य स्पष्टनं स्वरूपेण प्रकाशनं करोमीति शेषः ॥ तत्र पूर्वं सप्तस्वरादिक्रमेणोक्तामेव संख्यामेकादिक्रमेण तदुपयोगित्वेनाह—**इह लेख्या इति**। इह नष्टस्पष्टने क्रमस्थांकाः क्रमस्थाः अंकाः इत्थं लेख्याः स्थाप्याः ॥ ४९ ॥

**भू १ द्वौ २ ऋतवः ६ श्रुतिदृक् २४ खेना १२० नखगिरि ७२० खवेदखशराश्च ५०४० ॥**

**पात्यः क्रमांतिमांकात् प्रश्नांकः शेषमाद्याद्यैः ॥ ५० ॥**

स्थापनमेवाह—**भूरिति** ॥ भूः एकः ॥ द्वौ ॥ ऋतवः षट् ॥ श्रुतिदृक् चतुर्विंशतिः ॥ खेनाः शतं विंशत्युत्तरं ॥ नखगिरि सप्तशतानि विंशत्युत्तराणि ॥ खवेदखशराः पंचसहस्राणि चत्वारिंशदुत्तराणि चेति ॥ श्रुतिदृक् नखगिरीति च समाहारद्वंद्वौ ॥ एवं यथेष्टं एकस्वरादिक्रमांकेषु स्थापितेषु यत्कर्तव्यं तदाह—**पात्य इति** ॥ क्रमस्य यः अंतिमांकः ॥ तस्मात् प्रश्नांकः प्रश्नसंख्याया योऽकः स पात्यः न्यूनः कार्यः ॥ शेषं अत्र वीप्सा ज्ञेया ॥ शेषं शेषं अवशिष्टं अवशिष्टं ॥ अद्याद्यैः अंत्यांकात्पूर्वैः पूर्वैरंकैः ॥ ५० ॥

**भाज्यमथ लब्धलब्धे या या संख्या प्रपूरकास्तस्याः॥ पाठांतरं॥ भाज्यं यथार्हगुणितैस्तदनुगुणकगुणकतुल्यसंख्याकाः ॥**

**मूलक्रमद्वितीयद्वितीयतोंत्यादयो ज्ञेयाः ॥ ५१ ॥**

भाज्यं हरणीयं ॥ कीदृशैस्तैः यथार्हगुणितैः यथार्हं यथायोग्यं केनचिदंकेन ताडितैः अंते पिंडांके यावंतो भागाः गच्छंति तावत्संख्यांकेन ताडितैरिति यावत् ॥ तदनु ततःपरं गुणकगुणकतुल्यसंख्याकाः यैर्यैर्गुणिताः आद्याद्यांकाः भागं गृहीतवंतः तत्तुल्या संख्या एषां ते तादृशाः अंत्यादयो ज्ञेयाः अंत्यः नष्टस्यांतिमः स्वरः आदिर्येषां उपांत्योपोपांत्यादीनां ते द्वितीयांताः ॥ स्वरा व्युत्क्रमेण ज्ञेया इत्यर्थः ॥ ते कुतो गणनीया इत्यह आह ॥ मूलक्रमद्वितीयद्वितीयतः ॥ मूलक्रमे यो यो द्वितीयो द्वितीयस्ततस्ततः तावतिथसंख्याका इत्यर्थः ॥ ५१ ॥

**भागाभावे पूर्वो लब्धो लोप्यो मुहुः क्रमेऽकश्च ॥**
**शिष्टः प्रागथ कथयाम्युद्दिष्टमिह स्वरोंत्यस्तु ॥ ५२ ॥**

भागाभावे पूर्वः यदा आद्यांकेन अंत्यांके भागो न गच्छति तदा मूलक्रमद्वितीयद्वितीयतः यः यः पूर्वः स एव लेख्य इत्यर्थः। ननु पृष्ठस्य एकस्य नष्टभेदस्य मूलक्रमे द्वितीयः एक एव तत्कथं वीप्सा अत आह––**लब्धो लोप्य** इति ॥ नष्टे स्वर इति च शेषः ॥ नष्टैः लब्धः स्वरः क्रमे लोप्यः प्रोंछनीयः मुहुर्मुहुः वारंवारं ॥ तेन क्रमे अन्यः अन्यः द्वितीयः संभवतीति भावः ॥ येन भागो न गच्छति सोप्यंको लोप्य इत्याह––**अंकश्चेति** ॥ अन्येप्यंकाः स्वत एव लुप्यंत इत्यभाजनार्हस्यैव लोपविधिरित्यर्थः॥ न्यूनमेकं पूरयितुमाह–**शिष्टः प्रागिति** ॥ शिष्टः क्रमे लुप्तेभ्योवशिष्टः स्वरः प्राक् नष्टस्वरपक्तौ द्वितीयात्पूर्वं देय इत्यर्थः ॥ निदर्शनं यथा तत्र पंचस्वरप्रस्तारे पंचत्रिंशत्तमे भेदः कीदृक्स्वरूप इति प्रश्ने स्थानपंचके एकः ॥ द्वौ । षट् । चतुर्विंशतिः विंशत्युत्तरं शतं ॥ १ । २ । ६ । २४ । १२० इति क्रमस्थेषु अंकेषु लिखितेषु अंतिमात् अंकात् विंशत्युत्तरात् शतात् । १२० । प्रश्नांके पंचात्रिंशदात्मके पतिते पंचाशीतिः ॥ ८५ ॥ शेषं भवति ततो विंशत्युत्तरशतस्याद्यांकेन चतुर्विंशत्या यथायोग्यतया त्र्यंकेन गुणनात् ॥ द्वासप्ततित्वमापन्नतयः तास्मिन् शेषे पंचाशीत्यात्मके भाजिते पुनः शेषं त्रयोदश १३ ॥ अत्र भाजकस्य गुणकस्त्र्यंके इति मूलक्रमाद्वितीयात् ॥ ऋषभात् तृतीयसंख्याको म इति मध्यम एव नष्टे स्थाप्यते ततो नष्टे लब्धे म इति मः क्रमे लोप्यते ॥ ततः क्रमः सरिगम इति स्थितः ॥ ततः पुनः चतुर्विंशतेरप्याद्यांके षडंकेन योग्यतया द्व्यंकेन गुणनात् द्वादशात्मकत्वमापन्नेन त्रयोदशात्मके शेषे भाजिते पुनरेकः शेषं भवति ॥ अत्र तु भाजकस्य गुणको द्व्यंक इति मूलक्रमद्वितीयादृषभादेव द्वितीयो ग इति गांधार एव नष्टे उपांत्यः स्थाप्यते ॥ ततः नष्टे लब्धो ग इति गांधारः क्रमे लोप्यते ॥ ततः क्रमः सरिपेति स्थितः ॥ ततः पुनः षडंकस्याप्याद्येन द्व्यंकेन एकांकस्य शेषस्य भाजनासंभावात् मूलक्रमद्वितीयादृषभादेव पूर्वः षड्जो नष्टे उपोपांत्यः स्थाप्यते॥ ततो नष्टे लब्धः षड्ज इति सक्रमे लोप्यते ॥ ततः क्रमो रिपेति स्थितः ॥ अंकश्च लोप्य इति वचनात् ॥ द्व्यंकोपि लोप्यते ॥ ततः पुनर्द्व्यंकस्याप्याद्येन एकांकेन योग्यतया

एकांकेनैव गुणितेन एकेन गुणितं तदेव भवतीति न्यायात् एकत्वमेवापन्नेन एकात्मके शेषे भाजिते शेषशून्यं भवति ॥ अत्र तु भाजकस्य गुणक एकांक इति मूलक्रमद्वितीयात् पंचमात् प्रथमः प इति पंचम एव नष्टे उपोपांत्यस्याप्याद्यः स्थाप्यते ॥ ततो नष्टे लब्धः प इति क्रमे पः लोप्यते ॥ ततः क्रमो रीति स्थितः ॥ एवं अंत्यस्वरादयो द्वितीयस्वरांताः नष्टभेदे चत्वारः स्वरा भवंति ततः क्रमे लुप्तावशिष्टो रिः नष्टभेदपंक्तौ शिष्टः प्रागिति वचनात् प्रागुदीयते ॥ एवं पंचविंशत्तमो नष्टे भेदः ॥ रिपसगमेति स्वरूपः स्पष्टः संपद्यते ॥ एवमन्येपि ज्ञेयाः ॥ इति नष्टं ॥ अथोद्दिष्टस्पष्टनं प्रतिजानाति—**अथ कथयाम्युद्दिष्टमिति** ॥ स्वरूपमुक्त्वा कतितिथोयमिति संख्याविषयत्वेनैव भेदः पृच्छयते स उद्दिष्टस्वरूपत्वादुद्दिष्टसंज्ञकः ते कथयामि ॥ संख्याविशेषपूरकत्वेनेति शेषः ॥ तत्प्रकारमेवाह—**इह स्वर इति** ॥ इह उद्दिष्टस्वरूपे अंत्यस्तु स्वरः ॥ ५२ ॥

**यावतिथः स्यान्मूल क्रमाद्वितीयात्तया हतः प्राच्यः ॥**
**अंकेष्वंत्यात्पात्योऽथोद्दिष्टांत्यो द्वयोर्लोप्यः ॥ ५३ ॥**

मूलक्रमाद्वितीयात् यावतिथः यावतां संख्यापूरणः स्यात् क्रमे यो द्वितीयः तस्मात् आरभ्य प्रथमः द्वितीयादिर्भवेदित्यर्थः ॥ तया संख्ययेति शेषः। हतो गुणितः सन् अंकेषु पूर्वोक्तेषु एकद्विषडादिक्रमस्थांकेषु प्राच्यः आद्यः अंत्यात्पात्यः न्यूनः कार्यः अथेत्यनंतरं उद्दिष्टांत्यस्वर इति शेषः द्वयोर्लोप्यः ॥ कृतकार्यत्वात् उद्दिष्टस्वरूपे मूलक्रमस्वरूपे च प्रोंछनीय इत्यर्थः ॥ यावतिथ इति यावच्छब्दात् तस्य पूरण इति इटिवतो रिथुगिति इथुगागमः ॥ ५३ ॥

**अंत्ये क्रमद्वितीयात् पूर्वे लोप्योंक आदिमस्तूष्णीम् ॥**
**एवं भूयो भूयः शेषमिहोद्दिष्टसंख्या स्यात् ॥ ५४ ॥**

क्वचिदंकस्यापि लोपनमाह—अंत्य इति ॥ अंत्ये उद्दिष्टांत्यस्वरे क्रमद्वितीया-

त् पूर्वे सति इत्यर्थात् आदिमः अंकः परापेक्षया यः कश्चन पूर्वः सः तूष्णीं लोप्यः अकृतकृत्योपि प्रोंछनीय इत्यर्थः ॥ एवं भूयो भूयः पूर्वोक्तं सर्वमपि कर्म यावत्संभवं पुनः पुनः एवमेव कर्तव्यमित्यर्थः ॥ एवं कृत्वा सिद्धमाह—शेषमिहेति ॥ इह क्रमांकपंक्तौ शेषं सर्वविशिष्टं तदेवोद्दिष्टस्य या संख्या प्रथमद्वितीयादिः सा स्यात् संपद्यते ॥ निदर्शनं यथा ॥ पंचस्वरप्रस्तारे रिपसगमेति स्वरूपो भेदः कथित इति पृष्टे सरिगमपेति मूलक्रम उपरि स्थाप्यः रिपसगमेति उद्दिष्टभेदस्तु अधः स्थाप्यः ॥ स्थानपंचक एव एकं ॥ द्वौ षट् ॥ चतुर्विंशतिः विंशत्युत्तरं शतं ॥ १।२।६।२४।१२० ॥ इति क्रमस्थांकाश्च तदधः स्थाप्याः ॥ तत्रोद्दिष्टांत्यस्वरो मध्यमः क्रमे द्वितीयात् ऋषभात् तृतीयो वर्तते इति तत्संख्यया त्र्यंकेन गुणितः प्राच्योंकश्चतुर्विंशतिरूपः २४ द्वासप्ततिः ७२ तां आपन्नः सन् अंत्यांकात् विंशत्युत्तरात् शतात् १२० पात्यते तत्र शेषं अष्टचत्वारिंशत् ४८ अनंतरं मध्यमः उद्दिष्टस्वरूपे क्रमे च लोप्यते ॥ तथा सति क्रमः सरिगपेति स्थितः ॥ उद्दिष्टस्वरूपं रिपसगेति स्थितं ॥ एवं भूय इति वचनात् पुनः एवमेव कर्तव्यं ॥ तत्रोद्दिष्टांत्यस्वरो गांधारः क्रमद्वितीयात्तस्मादेव ऋषभात् द्वितीय इति तत्संख्याया द्व्यंकेन गुणितः प्राच्योंकः षड्रूपः ६ द्वादशतामापन्नः १२ सन् अंत्यांकात् अष्टचत्वारिंशतः ४८ पात्यते तत्र तु शेषं षट्त्रिंशत् ३६ ॥ अनंतरं गः उद्दिष्टस्वरूपे क्रमे च लोप्यते ॥ तथा सति क्रमः सरिपेति स्थितः उद्दिष्टस्वरूपं रिपसेति स्थितं॥ एवं भूयः करणे तु उद्दिष्टांत्यस्वरः षड्जः क्रमद्वितीयात्तस्मादेव ऋषभात् पूर्व इति प्राच्यो द्व्यंकस्तूष्णीं लोप्यते ॥ अनंतरं षड्जः उद्दिष्टस्वरूपे क्रमे च लोप्यते ॥ तथा सति क्रमः रिपेति स्थितः॥ उद्दिष्टस्वरूपमपि रिपेति स्थितं॥ एवं भूयः तत्रोद्दिष्टांत्यस्वरः पंचमः क्रमद्वितीयात् पंचमादेवारभ्य प्रथम एवेति तत्संख्यया एकांकेन गुणितः प्राच्योंक एकरूपः एकेन गुणितं तदेव भवतीति न्यायात् एकत्वमापन्नः सन् अंत्यांकात् षट्त्रिंशतः ॥ ३६ ॥ पात्यते ॥ शेषं पंचत्रिंशत् ॥ ३५ ॥ अनंतरं पः ॥ उद्दिष्टस्वरूपे क्रमे च लोप्यते ॥ तथा सति क्रमः रीति स्थितः ॥ उद्दिष्टस्वरूपमपि रीत्येव स्थितं ॥ अतःपरं

मूलद्वितीयस्य प्राच्यांकस्य च अभावात् ॥ एवं भूयः करणं नास्ति तस्मात् पंचत्रिंशतिः सर्वावशिष्टतया रिपसगमेति भेदः पंचत्रिंशत्तमः संपद्यते ॥ एवमन्यदपि उद्दिष्टभेदमात्रं ज्ञेयं ॥ उद्दिष्टस्य शुद्धये प्रस्तारो नष्टप्रकारो वा विलोक्यः ॥ शार्ङ्गदेवेन तु खंडमेरुप्रकारेण नष्टोद्दिष्टे स्पष्टीकृते ॥ इत्युद्दिष्टम् ॥ ९४ ॥

**गानक्रिया स्वराणां या वर्णः स कथितश्चतुर्भेदः ॥**
**स्थाय्यारोह्यवरोही संचारी चेत्यथ स्थायी ॥ ९५ ॥**

इदानीं ग्रामस्याधेयांतरं वर्णं सप्रभेदं लक्षयति---**गानक्रियेति** ॥ स्वराणां या गानक्रिया वक्ष्यमाणप्रकारेण गानकरणं उच्चारणमिति यावत् । सः वर्णनात् स्वरविस्तारणात् वर्णः कथितः ॥ कीदृक्चतुर्भेदः चतुःप्रकारः । तानेव प्रभेदानाह---**स्थाय्यारोह्यवरोही संचारी चेतीति** ॥ स्पष्टं ॥ तत्र स्थायिनं वर्णं लक्षयति ॥ **अथ स्थायीति** ॥ ९५ ॥

**स्थित्वा स्थित्वैकस्य प्रयोग आरोहणात्तथारोही ॥**
**अवरोहात्त्ववरोही संचारी तद्विमिश्रणतः ॥ ९६ ॥**

स्थित्वा स्थित्वा विलंब्य विलंब्य एकस्यैव प्रयोगः उच्चारणं स्थायी । वर्ण इति शेषः सर्वत्र ॥ सा सा सा रि रि रि एवमादिरित्यर्थः ॥ आरोहिणं वर्णं लक्षयति--**आरोहणात्तथेति** ॥ प्रयोगपदं सर्वत्र संबध्यते ॥ आरोहणात्प्रयोगः सरिगमपधनीति आरोही वर्णः ॥ अवरोहिणं लक्षयति---**अवरोहात्त्विति** ॥ अवरोहात् प्रयोगः निधमपगरिसेति ॥ अवरोही वर्णः ॥ संचारिणं लक्षयति--**संचारीति** ॥ तद्विमिश्रणतः तेषां त्रयाणां ससारिगा ॥ सनिधा। सरिगेत्येवं यथा ये । गं विमिश्रणात् संचारी वर्णः यत्र गानक्रियायां यस्य वर्णस्य बाहुल्यं दृश्यते तत्र तेन व्यपदेशः कर्तव्य इति ज्ञातव्यम् ॥ ९६ ॥

**सविशेषवर्णगुंफोऽलंकारोऽत्र कथयामि तद्भेदान् ॥**

**द्वात्रिंशतं तथा द्वौ प्रकरण इह हि परिभाषेयम् ॥ ५७ ॥**

वर्णग्रथनविशेषरूपं अलंकारं लक्षयन् तत्संख्याविशेषं कथ्यमानत्वेन प्रतिजानाति—**सविशेषवर्णगुंफ** इति ॥ विशेषेण वक्ष्यमाणनियतकलादिरूपेण सहितो यो वर्णगुंफः पूर्वोक्तवर्णग्रथनं न अलंक्रियते गीतमनेनेत्यलंकारः ॥ तथा च भरतः ॥ शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव ॥ अविभूषितेव च स्त्री गीतिरलंकारहीना स्यादिति ॥ अत्र ग्रंथे द्वात्रिंशतं तथा द्वौ तद्भेदान् अलंकारभेदान् कथयामि ॥ यद्यपि निःशंकादिभिस्त्रिषष्टिरलंकारा उक्तास्तथाऽपि तन्मध्यतः चतुस्त्रिंशत्तमेव तान् ॥ लाघवाय कथयामीत्यर्थः ॥ वक्ष्यमाणप्रकारेण द्वात्रिंशदपेक्षया द्वयोर्विलक्षणत्वात् पृथगुक्तिः ॥ अलंकारेष्वेवोपयोगिनीं परिभाषां वक्तुं प्रतिजानाति—**प्रकरण इह हीति** ॥ हिरवधारणे ॥ इह प्रकरणे हिरलंकारप्रकरण एव इयं वक्ष्यमाणा परिभाषा व्यापिका ससंकेता उक्तिः ॥ ५७ ॥

**मंद्रः स यस्तु पूर्वः स्वर उक्तोऽसौ मृदुः प्रसन्नश्च ॥**
**बिंदुशिराः स तु लिप्यां तारो द्विगुणः स दीप्तश्च ॥ ५८ ॥**

तमेवाह—**मंद्रः स इति** ॥ यस्तु पूर्वः स्वरः स मंद्रः उक्त इत्यन्वयः ॥ मध्यरूपपरापेक्षया मंद्र एव मंद्रःताररूपपरापेक्षया तु मध्योऽपि मंद्र इत्यर्थः ॥ मंद्रस्यैव व्यवहाराय पर्यायांतरे कथयति ॥ असौ मृदुः प्रसन्नश्चेति ॥ स्पष्टं ॥ मंद्रस्य लेखनसंकेतं कथयति—**बिंदुशिराः स इति** ॥ स तु मंद्रः लिप्यां लेखने बिंदुयुक्तं शिरः उपरिभागो यस्येति बिंदुशिराः ज्ञेय इति शेषः ॥ बिंदुशिरा इति शाकपार्थिवादित्वादुत्तरपदलोपः ॥ तारस्यापि परिभाषणमाह—**तारो द्विगुण इति** ॥ मंद्ररूपपूर्वापेक्षया मध्यस्वरो द्विगुणस्तारशब्दवाच्यः ॥ मध्यरूपपूर्वापेक्षयानुतार स्वर एव द्विगुणस्तारशब्दवाच्य इत्यर्थः । तारस्यापि पर्यायांतरं लेखनसंकेतं चाह—**स दीप्तश्चेति** ॥ ५८ ॥

**रेखामूर्धा लेखे प्लुतस्त्रिरुक्तेरथ प्रसन्नादिः ॥**
**मंद्रद्वयतस्तारे तद्विपरीतः प्रसन्नांतः ॥ ५९ ॥**

**संसंसं ॥ इति प्रसन्नादिः ॥ १ ॥ संसंसं ॥ इति प्रसन्नांतः ॥२॥**

स तारः दीप्तः लेखे रेखामूर्धा च दीप्तशब्दवाच्यः ॥ लिखने रेखायुक्तोपरिभागश्चेत्यर्थः ॥ रेखामूर्धेति पूर्ववत् ॥ प्लुतपरिभाषणमाह—**प्लुतस्त्रिरुक्तेरिति** ॥ यः स्वरः प्लुत इत्युच्यते स त्रिवारमुच्चारणीय इत्यर्थः ॥ त्रीन् वारानिति त्रिरिति द्वित्रिचतुर्भ्य इति सुच् ॥ एवं परिभाषा निरूप्य स्थायिवर्णाश्रितान् प्रसन्नादिप्रसन्नांतप्रसन्नाद्यंतप्रसन्नमध्यक्रमरेचिताख्यान् पंचालंकारान् लक्षयन् प्रसन्नादिं तावल्लक्षयति—**अथ प्रसन्नादिरिति** ॥ मंद्रद्वयतस्तारे परे सतीति शेषः ॥ प्रसन्नादिः स्यादिति शेषः ॥ द्विवारं मंद्रस्वरमुच्चार्य यदि सकृत्तारस्वर उच्चार्यते तदा प्रसन्नादिरित्यर्थः ॥ यथा संसंसं इति ॥ अथ प्रसन्नांतं लक्षयति—**तद्विपरीत इति** ॥ तस्मात्प्रसन्नादेः विपरितपूर्व सकृत्तारः पश्चात् द्विर्मंद्रः तदा प्रसन्नांतः ॥ यथा संसंसं इति ॥ ५९ ॥

**अन्वर्थकः प्रसन्नाद्यंतस्तादृक् प्रसन्नमध्योऽपि ॥**
**मृदुमध्यगो द्वितीयस्तृतीयतुर्यौ च तादृक्षौ ॥ ६० ॥**

**संसंसं इति प्रसन्नाद्यंतः ३ ॥ संसंसं इति प्रसन्नमध्यः ॥ ४ ॥**

अथ प्रसन्नाद्यंतं लक्षयति—**अन्वर्थक इति** ॥ प्रसन्नाद्यंतः अन्वर्थकः सार्थकः ॥ प्रसन्नः मंद्रः आदिः अंतश्च यस्येति तेन आदौ मंद्रः मध्ये तारः अंते च मंद्रो यदि तदा प्रसन्नाद्यंतः यथा ॥ संसंसं इति ॥ अथ प्रसन्नमध्यं लक्षयति—**तादृक् प्रसन्नमध्योऽपीति** ॥ प्रसन्नमध्योऽपि तादृक् अन्वर्थक इत्यर्थः । प्रसन्नः मध्ये यस्येति तेन आदौ तारः मध्ये मंद्रः अंते पुनस्तारो यदि तदा प्रसन्नमध्यः ॥ यथा संसंसं इति ॥ अथ क्रमरेचितं लक्षयति—**मृदुम-**

ध्यगो द्वितीय इति ॥ एवं त्रिकलः तिस्रः कला भागाः यस्य स क्रमरेचितः स्यादिति शेषः ॥ एवं कथं तदाह--मृद्वोर्मद्रयोर्मध्यं गच्छतीत्येवंभूतो द्वितीयः ऋषभः इत्याद्या कला ॥ चपरं तृतीयतुर्यौ गांधारमध्यमौ तादृक्षौ मृदुमध्यगावेव इति द्वितीया कला ॥ ६० ॥

**तद्वच्च पंचमाद्यं त्रितयं क्रमरेचितस्त्रिकल एवम् ॥**
**स्थायिगता इति पंचाऽऽरोहिगतास्ते पुनः सप्त ॥ ६१ ॥**

**संरिसं ॥ संगमसं ॥ संपधनिसं इति क्रमरेचितः ॥ ९ ॥**

पंचमाद्यं त्रितयं तद्वच्च पंचमषष्ठसप्तमाः ॥ पधनयः मृदुमध्यगा एव इति तृतीयकला ॥ यथा संरिसं, संगमसं, संपधनिसं ॥ इति तान्निगमयति-- **स्थायिगता इति पंचेति** ॥ स्थायिनं वर्णं गताः आश्रिताः पंचानामपि एषां आद्यंतयोरेकस्वरत्वादित्यर्थः ॥ तथा च निःशंकः ॥ येषामाद्यंतयोरेकः स्वरस्ते स्थायिवर्णगा इति ॥ इदानीं आरोहिवर्णाश्रितान् विस्तीर्णनिष्कर्षप्रेंखितबिंदुहसितसंधिप्रच्छादनाक्षिप्ताख्यान् सप्ताख्यान् सप्तालंकारान् लक्षयितुं प्रतिजानाति--**आरोहिगतास्ते पुनः सप्तेति** ॥ स्पष्टं ॥ ६१ ॥

**यत्रारोहेत्क्रमतः सविश्रमं सप्तभिः स्वरैर्दीर्घैः ॥**
**विस्तीर्णोऽयं शीघ्रं द्विर्गदितैस्तैस्तु निष्कर्षः ॥ ६२ ॥**

**सा री गा मा पा धा नी इति विस्तीर्णः ॥ १ ॥**
**ससरि रिगगम मपपध धनिनि इति निष्कर्षः ॥ २ ॥**

तत्र विस्तीर्णं लक्षयति--**यत्रारोहेदिति** ॥ यत्र दीर्घैर्लंबीकृतैः सप्तभिः स्वरैः सविश्रमं यथा तथा स्थित्वा स्थित्वेत्यर्थः ॥ क्रमतः आरोहेत् सोऽयं विस्तीर्णः यत्रेति संबंधात् स इति लभ्यते यथा सा री गा मा पा धा नी इति ॥ निष्कर्षं लक्षयति--**शीघ्रं द्विरिति** ॥ द्विः द्विवारं शीघ्रं द्रुतं गदितैस्तैस्तु सप्तभिरेव स्वरैः निष्कर्षः ॥ यथा सस रिरि गग मम पप धध निनि इति ॥ ६२ ॥

**यत्रारोहेद्द्वौ द्वौ दोलितचरमं विहाय तु क्रमतः ॥**
**पूर्वं पूर्वं प्रेंखित इति सबिंदुर्यदारोहे ॥ ६३ ॥**

**सरी । रिगा । गमा । मपा । पधा । धनी । इति प्रेंखः ॥ ३ ॥**

**समसरि । गगगम । पपपध । निनिनि । इति बिंदुः ॥ ४ ॥**

प्रेंखितं लक्षयति—**यत्रारोहेदिति** ॥ यत्र दोलितचरमं दोलितः कंपितः चरमः प्रांत्यः द्वितीय इति यावत् यस्मिन् कर्मणि तथा ॥ द्वौ द्वौ आरोहेत् सः प्रेंखित इति ॥ किं कृत्वा क्रमतः पूर्वं पूर्वं तु विहाय त्यक्त्वा प्रथमस्वरं गीत्वा द्वितीयमांदोलितं गायेत् ॥ ततः प्रथमत्यागे द्वितीयं गीत्वा तृतीयमांदोलितं गायेत् ॥ ततः द्वितीयादित्यागे तृतीयादिकं गीत्वा चतुर्थादिकमांदोल्य गायेदित्यर्थः ॥ यथा सरी । रिगा । गमा । मपा । पधा । धनी । इति ॥ बिंदुं लक्षयति—**स बिंदुर्यदारोहे इति** ॥ यदारोहे यस्यारोहे ॥ ६३ ॥

**क्रमतः प्लुतः सकृच्च प्लुतः सकृत् स्यादप्लुतः सकृत् प्लुतकः ॥**
**हसितो यत्रैकोत्तरवृद्ध्या वृत्तिः स्वरारोहः ॥ ६४ ॥**

**सा । रीरी । गगगा । मममगा । पपपपपा । धधधधधधा । निनिनिनिनिनिनी ॥ ५ ॥ इति हसितः ॥**

क्रमतः प्लुतः सकृत् चेत्यादिः स्वरः स्यात् स्वर इति शेषः ॥ सबिंदुः तत्र प्रथमः त्रिरुच्चार्यते ॥ द्वितीय एकवारं ॥ तृतीयस्त्रिः ॥ चतुर्थः सकृत् ॥ पंचमः त्रिः ॥ षष्ठः सकृत् ॥ सप्तमः त्रिरित्यर्थः ॥ यथा सससारी । गगगामा । पपपाधा । निनिनी इति सकृदिति। एकस्य सकृच्चेति साधु ॥ प्लुतक इति स्वार्थे कः । हसितं लक्षयति—हसितो यत्रेति ॥ यत्र एकोत्तरा वृद्धिर्यासां तादृश्यः आवृत्तयः आवर्तनानि यस्मिन् स एकोत्तरवृद्ध्या वृत्तिः स्वरारोहः सप्तस्वरारोहणं स हसितः ॥ स इति यत्रेति संबंधात् यस्मिन् प्रथमस्वरः स-

कृत् द्वितीयो द्विः तृतीयस्त्रिः चतुर्थश्चतुः पंचमः पंचकृत्वः इत्याद्युच्चार्यते स हसित इत्यर्थः ॥ यथा ॥ सा । रिरी । गगगा । मंमंमंमां । पपपपपा इत्यादि ॥ ६४ ॥

**संधिप्रच्छादनके त्रिस्वरकाद्या कला तथान्ये द्वे ॥**
**स्वस्वप्राच्यांत्यस्वरपूर्वे तद्वत् स आक्षिप्तः ॥ ६५ ॥**

**सरिगा । गमपा । पधनी ॥ इति संधिप्रच्छादनः ॥ ६ ॥**

संधिप्रच्छादनं लक्षयति—**संधिप्रच्छादनक इति** ॥ अस्मिन्नाद्या प्रथमा कला त्रिस्वरका तथाऽन्ये द्वे कले इति शेषः ॥ स्वस्वप्राच्यांत्यस्वरपूर्वे स्वस्वप्राच्या आत्मात्मपूर्वा या कला तस्याः अंत्यस्वरः पूर्वः आदिमः ययोस्ते तद्वत् त्रिस्वरके एव भवत इति शेषः ॥ यथा ॥ सरिगा । गमपा । पधनी इति ॥ आक्षिप्तं लक्षयति—**स आक्षिप्त इति** ॥ ६५ ॥

**मध्यमहीनाद्विद्विस्वरमाद्यकलांतिमादिमं भवति ॥**
**यत्र कलात्रयमेते पुनरवरोहिश्रिताः सप्त ॥ ६६ ॥**

**सगा । गमा । पनी ॥ इति आक्षिप्तः ॥ ७ ॥**

मध्यमेन मध्यभवेन हीनौ रहितौ द्वौ द्वौ स्वरौ यस्मिन् तादृशं कलात्रयं यत्र भवति स आक्षिप्तः कथं भवति ॥ आद्यकलायाः यः अंतिमः स आदिमः पूर्वो यस्मिन् कर्मणि इति क्रियाविशेषणं ॥ वीप्सात्र ज्ञेया ॥ यथा ॥ सगा । गपा । पनी इति ॥ अथ एतानेव विस्तीर्णादीन् सप्त अवरोहिवर्णाश्रितत्वेनापि संख्याद्वैगुण्याय कथयति—**एते पुनरवरोहिश्रिताः** सप्तेति ॥ स्पष्टं ॥ यथा ॥ नी धा पा मा गा री सा इति विस्तीर्ण इत्यादि ॥ ६६ ॥

**संचारिगास्त्रयोदश पूर्वः पूर्वः परस्य यदि भवति ॥**
**आद्यंतयोः प्रसादः स्यात्स प्रेंखः कला यस्य ॥ ६७ ॥**

कुरुते गमनागमने द्विस्वरकाद्या कलास्तथैवान्याः ॥
एकैकस्वरहान्या रंजित आदिमकलाद्यांत्या ॥ ६८ ॥
द्विः प्रथमतृतीयकमध्यमायमास्तद्वदुज्झितैकैकाः ॥
आक्षेपे त्रिस्वरकाद्यकलानान्याः परपरग्रहणात् ॥ ६९ ॥
हित्वा पूर्वं पूर्वं समास्तयाऽथ परिवर्त आद्यकला ॥
उक्ता द्वितीयमुक्ता त्रिस्वरकामुक्तमुक्ताद्याः ॥ ७० ॥
अन्यकलाः पूर्वसमा भवंतिः कूजिते प्रसादस्य ॥
सकलाः कलाःस्युराद्यात् तृतीयमोयाद्यगोनेन ॥ ७१ ॥

सरिसा । रिगरी । गमगा । मपमा । पधपा । धनिधा । इति प्रसादः ॥ १ ॥ सरीरिसा । रिगागरी । गमामगा । मपापमा । पधाधपा । धनीनिधा । इति प्रेंखकः ॥ २ ॥ सगरि । सगरिसा । रिमग । रिमगरी । गपमगपमगा । मधपमधपमा । पनिधपनिधपा । इति रंजितः ॥ ३ ॥ सरिगा । रिगमा गमपा मपधा । पधनी ॥ इति आक्षेपः । सगमा । रिमपा । गपधा । मधनी । इति परिवर्तः ॥ ४ ॥ सरिसागसा । रिगरीमरी । गमगापगा । मपमाधमा । पधपानिपा इति निःकूजितः ॥ ५ ॥

अथ संचारिवर्णाश्रितान् प्रसादप्रेंखरंजिताक्षेपपरिवर्तनिःकुजितोद्वाहितोदाटितहुंकारस्खलितक्रमश्येनन्हादमानाख्यान् त्रयोदशालंकारान् लक्षयितुं प्रतिजानाति—**संचारिगास्त्रयोदशेति** ॥ संचारिणं वर्णं गच्छंति संचारिगाः त्रयोदशालंकाराः तत्र प्रसादं लक्षयति—**पूर्वः पूर्व इति** ॥ यदिपूर्वः पूर्वः परस्य आद्यंतयोः भवति ॥ अत्र पूर्वः पूर्व इत्युक्तेः परस्परस्येति ज्ञेयं ॥ आदौ पूर्वस्वरः मध्ये तत्परः स्वरः अंते च पूर्वस्वर एव एवं द्वितीय आदावंते च तृतीयो मध्ये इत्यादि तर्हि प्रसादः स्यात् ॥ तर्हीति यदि संबंधात् ॥ यथा ॥ सरिसा । रिगरी । गमगा । मपमा पधपा धनिधा इति ॥ प्रेंखं लक्षयति—**स प्रेंखः कला यस्येति** ॥ यस्य द्विस्वरका आद्या कला गमनागमने आरोहावरोहौ कुरुते अन्याः अन्यकलाः एकैकस्वरस्य या हानिस्तया ॥ ६ ॥ उपल-

क्षिताः इत्यर्थात् तथैव स्युरिति शेषः ॥ एकं एकं हित्वा द्विस्वरा एव तत्यः आरोहावरोहौ कुर्वते इत्यर्थः। स प्रेंखः ॥ यथा ॥ सरीरिसा । रिगागरी गमामगा । मपापमा । पधाधपा । धनीनिधा इति ॥ रंजितं लक्षयति ॥ रंजित आदिमकलाद्यांत्येति ॥ रंजिते आदिमकला द्विर्द्विरुक्ता प्रथमतृतीयमध्यमा यस्यां सा द्विः प्रथमतृतीयकमध्यमा तथा आद्यः प्रथमस्वरःअंत्यो यस्याः सा आद्यांत्या प्रथमतृतीयद्वितीयान् तथा आद्यः प्रथमस्वरः अंत्यो यस्याः सा आद्यांत्या प्रथमतृतीयद्वितीयान् द्विरुच्चार्य पुनरंते प्रथम उच्चार्यत इत्यर्थः ॥ पराः अन्यकलाः उज्झितः त्यक्तः एकैकौ यासु तथाविधाः सत्यः तद्वत् तास्वपि प्रथमतृतीयद्वितीयान् तद्विरुच्चार्य अंते पुनः प्रथमउच्चार्यते इत्यर्थः ॥ यथा ॥ सगरिसगरिसा । रिमगरिमगरी । गपमगपमगा । मधपमधपमा । पनिधपनिधपा इति ॥ आक्षेपं लक्षयति--आक्षेप इति ॥ आक्षेपे आद्यकला त्रिस्वरका अन्याः कलाः पूर्वं पूर्वं हित्वा त्यक्त्वा परस्परग्रहणात् परस्परस्य यद्ग्रहणं अंगीकारः तस्मात्स्युरिति शेषः ॥ कीदृश्यः ताः तया आद्यकलया समाः त्रिस्वरत्वेन तुल्या इत्यर्थः॥यथासरिगा। रिगमा । गमपा । मपधा।पधनीति॥परिवर्तं लक्षयति--**अथ परिवर्त इति**॥ अस्मिन् आद्यकलाद्वितीयमुक्त्वा द्वितीयेन त्यक्त्वा त्रिस्वरका उक्ता ॥ अन्यकलाः·मुक्तमुक्ताद्याः यः पूर्वं पूर्वं त्यक्तः स्वरः स आद्यः प्रथमो यासां तादृश्यः सत्यः पूर्वसमा भवंति आद्यकलावत् द्वितीयपरित्यागेन त्रिस्वरा इत्यर्थः ॥ यथा ॥ सगमा । रिमपा । गपधा । मधनी इति ॥ निःकूजितं लक्षयति--**निःकूजिते इति** ॥ तस्मिन् प्रसादस्य पूर्वोक्तस्य सकलाः कलाः प्रथमद्वितीयप्रथमस्वराद्वितीयतृतीयस्वरेत्यादिरूपाः आद्यात् प्रथमात् तृतीयमेत्य उच्चार्य आद्यगानेन स्युः ॥ अत्र सकलाः कलाः इत्युक्तेः आद्यात् आद्यात् तृतीयं तृतीयं आद्याद्यगानेनेति वीप्सा ज्ञेया ॥ यथा ॥ सरिसागसा । रिगरीमरी । गमगापगा । मपमाधमा । पधपानिपा इति ॥ ७१ ॥

**उद्वाहिते त्रयं प्राग् मध्यगतश्चापराः कलास्त्यक्त्वा ॥**
**पूर्वं पूर्वं तादृग्विधाः स्युरुद्वाहिते त्वाद्यात्** ॥ ७२ ॥

गीत्वा स्वद्वयं पंचमतश्चतुरस्ततोवरोहेच्चेत् ॥
आद्या कलैवमन्ये त्यागात्पूर्वस्य पूर्वस्य ॥ ७३ ॥

सरिसरी । रिगमगा । गमपमा । मपधपा । पधनिधा ।
इति उद्ग्राहितः ॥ ८ ॥

सरिपमगरी । रिगधपमगा । गपनिधपमा इति उद्धटितः ॥९॥

उद्ग्राहितं लक्षयति—उद्ग्राहित इति ॥ अस्मिन् प्राक् पूर्वस्यां कलायां त्रयं त्रयः स्वराः मध्यगतः द्वितीयश्च ॥ अपराः कलाः पूर्वं पूर्वं त्यक्त्वा तादृग्विधाः पूर्वकलाप्रकाराः स्युः द्वितीयतृतीयादीनारभ्य त्रिस्वरकाः स्वस्वद्वितीयसहिताश्चेत्यर्थः ॥ यथा ॥ सरिगरी । रिगमगा । गमपमा । मपधपा । पधनिधा इति॥उद्घट्टितं लक्षयति—उद्घट्टितेत्वाद्यादिति॥ उद्घट्टिते तु चेत् आद्यात् प्रथमादारभ्य स्वरद्वयं गीत्वा ततः पंचमतः आद्यात् यः पंचमः तमारभ्य चतुरःस्वरानवरोहेत् तर्हीत्यर्थात् आद्यकला भवतीति शेषः ॥ अन्ये कले पूर्वस्य त्यागात् एवं ॥ तयोरपि द्वौ द्वौ स्वरौ गीत्वा आद्यात् आद्यात् यः पंचमः पंचमः तं तमारभ्य स्वरचतुष्टयमवरोहेदित्यर्थः ॥ यथा ॥ सरिपमगरी । रिगधपमगा । गमनिधपमा इति ॥ आद्यात् पंचमत इति च ल्यब्लोपे कर्माणि पंचमी ॥ ७२ ॥ ७३ ॥

हुंकारे द्विस्वरका कलादिमांत्यं विनाऽवरोहंती ॥
एकैकोत्तरवृद्धस्वराः स्युरपराः कलास्तद्वत् ॥ ७४ ॥

सरिसा । सरिगरिसा । सरिगमगरिसा । सरिगमपगरिसा ।
सरिगमपधपमगरिसा । सरिगमपधनिधपमगरिसा इति हुंकारः ॥ १० ॥

हुंकारं लक्षयति—हुंकारेति अस्मिन् आदिमा कला द्विस्वरका सती अंत्यं विना अवरोहंती स्यादिति शेषः ॥ प्रथमाद्वितीयप्रथमस्वरूपेत्यर्थः ॥ अपराः कलाः

एकैकोत्तरवृद्धाः स्वराः यासु ताः तद्वत्स्युः द्वितीयकला त्रिस्वरा अंत्यं विना अवरोहंती च एवं तृतीयादयः चतुरादिस्वरकाः अंत्यं विना अवरोहंत्यश्चेत्यर्थः ॥ यथा ॥ सरिसा । सरिगरिसा । सरिगमगरिसा । सरिगमपगरिसा । सरिगमपधपमगरिसा । सरिगमपधनिधपमगरिसा इति ॥ ७४ ॥

**स्खलिते चतुःस्वराद्या विपरीतांतर्द्वया गतागतभृत् ॥**
**प्राच्यप्राच्यत्यागाज्ज्ञेया इतराः कलास्तद्वत् ॥ ७५ ॥**

**सगरिमामरिगसा । रिमगपापगमरी । गपमधमपगा । मधपनीनिपधमा इति स्खलितः ॥ ११ ॥**

स्खलितं लक्षयति—**स्खलित इति** ॥ अस्मिन् आद्या कलेति प्रकरणात् चतुःस्वरा तथा विपरीतं अंतःमध्ये द्वयं स्वरद्वयं यस्याः सा प्रथमतृतीयद्वितीयचतुर्थस्वरूपा तथा गतागतभृत् आरोहावरोहधारिणी ॥ इतराः कलाः प्राच्यप्राच्य त्यागात् पूर्वपूर्वत्यागात् तद्वत् ज्ञेयः चतुःस्वरकाः विपरीतमध्यस्वरद्वयास्तथैव पुनरवरोहवत्यश्चेत्यर्थः ॥ यथा ॥ सगरिमामरिगसा ॥ रिमगपापमगरी । गपमधाधमपगा । मधपनीनिपधमा इति ॥ ७५ ॥

**द्वित्रिचतुःस्वरककलः प्रथमादिपुरःसराः क्रमे क्रमतः ॥**
**तिस्रस्तिस्रः श्येनः संवादिद्वंद्वतः क्रमतः ॥ ७६ ॥**

**सरिसरिगसरिगमा । रिगरिगमरिगमपा । गमगमपगमपधा । मपमपधमपधनी । इति क्रमः ॥ १२ ॥**

**सपा । रिधा । गनी । मसा इति श्येनः ॥ १३ ॥**

क्रमं लक्षयति—**द्वित्रिचतुरिति** । क्रमे क्रमतः प्रथमादिपुरःसराः द्वित्रिचतुःस्वरकलाः त्रिस्रः तिस्रो ज्ञेया इति शेषः ॥ तत्र प्रथमपुरःसरा द्विस्वरा ॥ प्रथमपुरःसरा त्रिस्वरा ॥ प्रथमपुरःसरा चतुःस्वरा इति तिस्रः कलाः । तथा द्वितीयपुरःसरा द्विस्वरा ॥ द्वितीयपुरःसरा त्रिस्वरा ॥ द्वितीयपुरः सरा चतुःस्वरा इति चतस्रः कलाः ॥ एवं तृतीयपुरःसरा द्विस्वरादयः तिस्रः ॥ चतुर्थपुरःसरा अपि द्विस्वरादयः तिस्रः ॥ यथा सरिसरिगसरिगमा ॥ रिगरिगमरिगमपा गमगमपगमपधा मपमपधमपधनी इति ॥ श्येनं लक्षयति—**श्येनसंवादीति** ॥

श्येनः संवादिनां अंतर्गतद्वादशश्रुतिकानां स्वराणां यानि द्वंद्वानि युग्मानि तैः क्रमतः श्येनः स्यादिति शेषः ॥ यद्यपि अंतर्गतश्रुत्यष्टकत्वेन समेत्यपि युग्मं संभवति तथाऽपि क्रमत इत्युक्तेः। सरिगमाद्यानि चत्वारि युग्मानि। यथा ॥ सपा । रिधा । गनी । मसा । इति ॥ तथा च निःशंकः ॥ श्येनः संवादियुग्मकः क्रमात्सरिगमाद्यैः स्यादिति ॥ द्वंद्वत इति सार्वभौमकस्तसिः ॥ ७६ ॥

**स्याह्रादमान आद्यस्तृतीयकोऽथ द्वितीय आद्यश्च ॥**
**मुक्त्वैकैकं पुनरिति परमत एतेऽवरोहेऽपि ॥ ७७ ॥**

**सगरिसा । रिमगरी । गपमगा । मधपमा पनिधपा । इति ह्रादमानः ॥ १४ ॥**

ह्रादमानं लक्षयति–**स्याह्रादमान** इति ॥ अस्मिन् आद्यः अथेति ततः परं तृतीयः द्वितीयः आद्यश्च इत्येका कलेत्यर्थात् कलांतराणि कथयति–**मुक्त्वैकैकं पुनरिति** ॥ एकं एकं त्यक्त्वा प्रथमतृतीयद्वितीयप्रथमस्वरूपा द्वितीयादयः कला ज्ञेया इत्यर्थः ॥ यथा सगरिसा । रिमगरी । गपमगा । मधपमा पनिधपा इति ॥ इति पंच सप्त सप्त त्रयोदश च मिलिता द्वात्रिंशदलंकाराः ॥ निःशंकमतेन संचार्यलंकारान् अवरोहेणाप्याह–**परमत इति** ॥ एते संचारिवर्णालंकाराः परमते अवरोहेपि भवंतीति शेषः ॥ तथा च **शार्ङ्गदेवः**—एते संचार्यलंकारा आरोहेण प्रदर्शिताः ॥ एतानेवावरोहेऽपि प्राह श्रीकरणाग्रणीरीति ॥ यथा ॥ धनिधा । पधपा । मपमा । गमगा । रिगरी । सरिसा इति प्रसादः एवं प्रेंखादयोऽपि द्वादश ॥ ७७ ॥

**द्वौ यावपरौ तत्रारुह्याद्यादष्टमस्वरावधिकं ॥**
**आद्याद्यस्मिन्गायेत्सतारमंद्रप्रसन्नाख्यः ॥ ७८ ॥**

**सरिगमपधनिससं इति तारमंद्रप्रसन्नः ॥ १५ ॥**

एवं वर्णचतुष्टयाश्रितान् द्वात्रिंशदलंकारान्निरूप्य अवशिष्टसंख्यानुवादपूर्वं लोकप्रसिद्धतरसप्तालंकारमध्यस्थौ तारमंद्रप्रसन्नमंद्रतारप्रसन्नाख्यालंकारौ लक्षयन् प्रथमं लक्षयति—**द्वौ यापराविति** ॥ तत्र तयोर्मध्ये स तारमंद्रप्रसन्नाख्यो यस्मिन् आद्यात् प्रथमस्वरमारभ्य अष्टमस्वरः अवधिः यत्र इति अ-

ष्टस्वरावधिकं आरुह्य प्रथमस्वराद्याष्टस्वरान्गीत्वा आद्यं गायेत् ॥ यथा सरि-
गमपधनिससं ॥ इति परंतु प्रथमकलेयं ॥ अस्य द्वितीयादिकला अग्रे व-
क्ष्यंते ॥ ७८ ॥

**आद्यत उत्कृत्याष्टममवरोहः प्राक्तनस्य यत्र भवेत् ॥**
**स्वरसप्तकस्य गदितः स मंद्रतारप्रसन्नश्च ॥ ७९ ॥**

**संसनिधपपगरिसंइति मंद्रतारप्रसन्नः ॥ १६ ॥**

द्वितीयं लक्षयति—**आद्यत इति** ॥ यत्र आद्यतः अष्टमं उत्कृत्य आद्यं गी-
त्वा मध्यस्थानं विहाय अष्टमं च गीत्वेत्यर्थः ॥ प्राक्तनस्य अष्टमात्पूर्वस्य स्व-
रसप्तकस्य अवरोहः वैपरित्येन गानं भवेत् ॥ स च मंद्रतारे प्रसन्नः गदितः ॥
यथा ॥ संसनिधपमगरिसं इति ॥ इयमपि अस्य प्रथमकला अपराः व-
क्ष्यंते ॥ ७९ ॥

**पूर्वैकैकत्यागात्तयोर्द्वितीयादिकाः कला ज्ञेयाः ॥**
**त इति चतुस्त्रिंशदिह हि परंतु तेषामनंतत्वं ॥ ८० ॥**

द्वयोरपि द्वितीयादिकाः कलाः कथयति—**पूर्वैकैकेति** ॥ तयोस्तारमंद्रप्रस-
न्नमंद्रतारप्रसन्नयोः द्वितीयादिकाः कलाः पूर्वं योऽयं एकैकस्तस्य त्यागाज्ज्ञे-
याः ॥ यथा ॥ रिंगमपधनिसरिरिं इत्यादयः षट् तारमंद्रप्रसन्नस्य कलाः ॥ य-
था च रिंरीसनिधपमगरिंइत्यादयश्च षट् मंद्रतारप्रसन्नस्य कलाः ॥ उक्तानलं-
कारान् समुदित्वेन निगमयति—**त इति चतुस्त्रिंशदिति** ॥ इह हि ग्रंथे अलं-
कारा इति चतुःस्त्रिंशत् ॥ अलंकाराणां सामस्त्येन कथनं प्राचीनैरपि अशक्य-
मित्याह—**परंतु तेषामनंतत्वमिति** । स्पष्टं ॥ तथाच निःशंकः । इति प्रसिद्धा-
लंकारास्त्रिषष्टिरुदिता मया ॥ अनंतत्वात्तु शास्त्रे न सामस्त्येन प्रकीर्तिता
इति ॥ ८० ॥

**अलमेतेऽलंकारा रंजनलब्ध्यै स्वरावबोधाय ॥**
**वर्णांगव्यासाय च तदवश्यं पूर्वमभ्यस्याः ॥ ८१ ॥**

अलंकारानिरूपणे प्रयोजनं कथयन् गानसिद्ध्यै तदभ्यासं विधत्ते—**अलमे-**

त इति ॥ एते अलंकाराः अलं समर्थाः कस्मै रंजनलब्ध्यै स्वराणां रक्तिलाभा-
य च पुनः स्वराणां योऽवबोधः स्वरूपज्ञानं तस्मै पुनः वर्णांगानां स्थाय्यादीनां
यो व्यासः विस्तारस्तस्मै च ॥ तत्तस्मादवश्यं पूर्वं अदावभ्यस्या अलंकारा
अभ्यसनीया इत्यर्थः ॥ तथाच निःशंकः ॥ रक्तिलाभः स्वरज्ञानं वर्णांगानां
विचित्रता ॥ इति प्रयोजनान्याहुरलंकारनिरूपणे इति ॥ ८१ ॥

**स्वरआदिस्था गीते ग्रहः प्रयोगबहुलोंऽश आदिष्टः ॥**
**गीतिसमाप्तिविधायी न्यासप्रतिरागमेते स्युः ॥ ८२ ॥**

एवं मूर्छनाद्यलंकारांतान् ग्रामाधेयान्निरूप्य वक्ष्यमाणरागाणामपि ग्रा-
माधेयत्वात्तदविनाभावित्वेन पारंपर्यतो ग्रामाधेयान् ग्रहादीनपि लक्षयति—
**स्वर आदिस्थ** इति ॥ गीते रंजकस्वरसंदर्भरूपे रागादौ आदिस्थः उपक्रमे
गृह्यमाणः षड्जाद्यन्यतमः स्वरः ग्रह आदिष्टः कथितः आदिष्टपदं मध्यपठित-
मपि ग्रहन्यासाभ्यामपि संबध्यते ॥ प्रयोगबहुलः रुच्या पुनः पुनरावर्त्यमा-
नस्वरः अंश आदिष्टः ॥ गीतसमाप्तिविधायी रागाद्युपसंहारकारी स्वरः न्यस्य-
ते समाप्यते गीतमनेनेति न्यास आदिष्टः ॥ ननु अथ न्याससंन्यासविन्यासा-
नामन्येषामपि ग्रहादिवत् सद्भावात् कथं त्रय एवेह लक्षिता इत्यत आह॥ प्र-
तिरागमेते स्युरिति ॥ ग्रंथप्रतिपाद्येषु रागमात्रेषु त्रय एव एते अव्यभिचारेण
संति ॥ अपन्यासादयस्तु गीतखंडरूपायां विदार्यामेवेति क्वाचित्कत्वेन नेह ते
लक्षिता इति भावः ॥ ८२ ॥

**सकलकलेत्युपनामकसोमकविहितेल्पबुद्धीनां ॥**
**प्रथमः श्रुतिस्वरादे रागविबोधे विवेकोऽयं ॥ १ ॥**

सर्वमुक्तं विवेकनाम्ना ग्रंथैकदेशावच्छेदकविशेषेण निगमयति—**सकलक-
लेति** ॥ अयं श्रुतिस्वरादेः श्रुतिस्वरादिपदार्थजातसंबंधि विवेकः विविच्यंते प्रा-
करणिकपदार्थः यस्मिन्निति विवेकः रागविबोधे प्रथमः ॥ १ ॥ सकलकले-
त्युपनामकमुद्गलसूरिसूतसोमनाथेन ॥ रागविबोधविवेकः प्रथमज एवं मना-
ग्विवृतः ॥ १ ॥

समाप्तः

# श्रीसोमनाथविरचितो रागविबोधः ।

स्वकृतटीकया समेतः ।

तत्र

## द्वितीयो विवेकः ।

घारपुरे इत्युपनामकेन गणेशशास्त्रिसूनुना पुरुषोत्तमेन

विद्वत्साहाय्येन संशोधयित्वा

पुण्याख्यपत्तने

जगद्धितेच्छुनाम्नि मुद्रणालये मुद्रापयित्वा

प्राकाश्यं नीतः ।

शाके १८१७

मूल्यमानकषट्कम् ।

प्रापणव्ययस्त्वाणकार्धम् ।

## ॥ द्वितीयो विवेकः ॥

**रागविबोधनहेतोरिह मेला ये मयाऽभिधास्यंते ॥**
**तदभिव्यक्तिनिदानं वीणादौ वर्ण्यते रौद्री ॥ १ ॥**

एवं श्रुतिस्वरादीन्निरूप्य रागनिरूपणस्यावसरः ॥ तत्र ते तु मेलैः प्रकाश्यंते मेलाश्च वीणयाऽभिव्यज्यंते इति रुद्रवीणानिरूपणमादौ प्रतिजानाति— **रागविबोधनहेतोरिति** ॥ इह ग्रंथे ये मेलाः मिलंति वर्गीभवंति रागा येष्विति तदाश्रयाः स्वरसंस्थानविशेषाः थाट इति भाषायां रागविबोधनहेतोर्मया अभिधास्यंते तृतीयाविवेके कथयिष्यंते ॥ तदभिव्यक्तिनिदानं तन्मेलानां प्रकाशने आदिकारणं रौद्री रुद्रसंबंधिनी रुद्रप्रियेति यावत् । वीणा आदौ वर्ण्यते ॥ रौद्रीति तस्येदमित्यणि टिड्डिणिति ङीप् ॥ १ ॥

**शंभुर्दंडो गौरी तंतुर्यस्या रमापतिः ककुभः ॥**
**मा पत्रिका विरिंचिस्तुंबं वागीश्वरी नाभिः ॥ २ ॥**
**अहिपो दोरक इंदुर्जीवोऽर्कः सारिकाश्च वीणा सा ॥**
**अपि हरति दृष्टमात्रा देवमयत्वान्महापापम् ॥ ३ ॥**

ननु स्वरमंडलादावपि मेला अभिव्यज्यंते तत्किमस्या एव निरूपणेनेत्याशंक्य अस्यास्तेषु तेष्वंगेषु तत्तद्देवताधिष्ठानान्महापातकनाशकतयोत्कर्षमाह—**शंभुरिति** द्वाभ्याम् ॥ सा वीणा देवमयत्वात् देवप्रचुरत्वात् देवस्वरूपत्वाद्वा दृष्टमात्रापि महापापं ब्रह्महत्यादिकं हरति किमुत स्पृष्टेत्यर्थात् ॥ अपि हरतीत्यपिर्भिन्नक्रमः ॥ देवमयत्वमेवाऽऽह—**शंभुरिति**॥यस्याः दंडः शंभुः शंभोराधिष्ठानाच्छंभुरुच्यते ॥ आधाराधेययोरभेद उपचारतः । एवं गौर्यादिषु ॥ यस्याः तंतुः तंत्रिका गौरी पार्वती ककुभः प्रसेचकः ॥ वक्ष्यमाणः कहो इति भाषायां सः रमापतिः ॥ पत्रिका ककुभोर्ध्वभागस्थानादातिशयहेतुर्लोहपट्टिका सा मा लक्ष्मीः ॥ तुंबं अलाबुफलं विरिंचिर्ब्रह्मा ॥ नाभिः वक्ष्यमाणलक्षणा चुंवकीति भाषायां ॥ सा वागीश्वरी सरस्वती ॥ दोरकः नागपाशयुता तंत्र्यः बंधनरज्जुः सा अहिपः वासुकिः ॥ जीवा वक्ष्यमाणलक्षणा जिव्हाली झारा इति भाषायाम् ॥सा इंदुश्चंद्रः ॥ सारिकाः वक्ष्यमाणलक्षणाः । ताः अर्कः सूर्यः ॥ तथा च शार्ङ्गदेवः—" दर्शनस्पर्शने चास्या भोगस्वर्गापवर्गदे ॥ पुनीतो विप्रहत्यादिपातकैः पतितं जनं ॥ दंडः शंभुरुमा तंत्री ककुभः कमलापतिः ॥ इंदिरा पत्रिका ब्रह्मा तुंबं नाभिः सरस्वती ॥ दोरको वासुकिर्जीवो सुधांशुर्दोरिका रविः ॥ सर्वदेवमयी तस्माद्वीणेयं सर्वमंगला" इति ॥ सर्वदेवमयीत्युक्त्या यथासंभवमन्येषामंगानां प्रत्यंगानामपि तत्तद्देवतात्वमेवसूचितम् । ग्रंथांतरेतु सारिकाश्रेणेः सूर्यत्वं कीलकद्वयस्य अश्विनीसुतत्वं मेढकस्य शक्रत्वमपि साक्षात्कथितम् ॥ प्रकृतिः सर्ववीणानामेषा इति **शार्ङ्गदेवोक्तेः** । विकृतेरन्यवीणाया अपि प्रकृतिवत् विकृतिरिति न्यायात् तथात्वमेव बोद्धव्यम् ॥ २ ॥ ३ ॥

**धर्मस्तयाऽश्वमेधे गानविधेर्ब्राह्मणाविति श्रुतितः ॥**
**वीणाप्रियेण राज्ञाऽर्प्यते द्रुतं वैणिकायार्थः ॥ ४ ॥**
**तस्माद्गायंतामिति श्रुतेस्तया गायतः स्फुटः कामः ॥**
**वीणावादनतत्त्वेति याज्ञवल्क्यस्मृतेः स्मृतो मोक्षः ॥ ५ ॥**

न केवलं पापापहारितया अस्याः श्रैष्ठ्यं किंतु धर्मादिचतुष्टयसाधनतया-पीत्याह—**धर्मस्तयेति** सार्धद्वयेन अक्षरषट्कन्यूनेन ॥ तया वीणया धर्मः पुण्यं फलं भवतीति शेषः ॥ कुतः अश्वमेधे तद्यागप्रकरणे ब्राह्मणाविति श्रुतितः ॥ " ब्राह्मणौ वीणागाथिनौ गायतः ब्राह्मणोऽन्यो गायेदिति " श्रुतेः तया वीणया गानविधेर्गाननोदनात् तया । इति उभयत्रापि संबध्यते ॥ सांगात्कर्मणः फलावश्यंभावनियम इति वीणागानरूपांगवैकल्ये तु तद्धानिः स्यादिति भावः ॥ अर्थसाधनत्वं तु वीणाप्रियेण वीणागानरुचिना राज्ञा वैणिकाय वीणा तद्वादनं शिल्पं कौशल्यमस्येति वैणिकस्तस्मै अर्थः धनं द्रुतं सपदि अर्प्यते दीयते प्रसिद्धमेतादित्यर्थः ॥ वैणिकायेति शिल्पमिति ठक् ॥ कामसाधनत्वं तु " तस्माद्गायंत इति श्रुतेः " ॥ तया वीणया गायतः गातुः पुंसः कामः स्त्रीभोगः स्फुटः लोकप्रसिद्धः ॥ मोक्षसाधनत्वं तु वीणावादनतत्त्वेति ॥ ' वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ॥ तालज्ञश्चाप्रयासेन मोक्षमार्गं स गच्छति ' इति **याज्ञवल्क्यस्मृतेः** मोक्षः स्मृत उक्तः ॥ ४ ॥ ५ ॥

**इति पुरुषार्थचतुष्टयसाधनमपि साधिका च सर्वाभ्यः ॥**
**द्रुतकारिणी स्वरगतेः सारीभिर्मंजुलतमरवा ॥ ६ ॥**

इति पुरुषार्थानां यच्चतुष्टयं तस्य साधनमपि संपादिका च रुद्रवीणा । अपिश्चार्थे ॥ प्रकारांतरद्वयेनापि अस्याः श्रैष्ठ्यमाह—**अधिका चेति** ॥ सा सर्वाभ्यः अधिका च सा इति इहापि संबध्यते । हेतुगर्भं विशेषणद्वयमाह—**द्रुतेति** ॥ **मंजुलेति**॥सारीभिः पूर्वोक्तसारिकाभिः स्वरगतेः स्वरज्ञानस्य द्रुतकारिणी ॥ वीणायां सारिसहितायां बालानां शीघ्रं श्रुतिस्वरज्ञानं भवति ॥ सारीरहितायां तु चिरकालेनेति भावः ॥ मंजुलतमः अतिशयितकोमलो रवो ध्वनिर्यस्याः सा सारिभिरित्यत्रापि संबध्यते ॥ यथा सारीवीणाया नादे माधुर्यं न तथा अन्यवीणाया इति लोकप्रसिद्धमेवेति भावः ॥ ६ ॥

**श्रुत्या स्मृत्या दृष्टां रुद्रेष्टां नारदादिभिर्जुष्टाम् ॥**

कलयंत्वलयं वीणां संतः संतोषपोषार्थम् ॥ ७ ॥

एवं श्रुतिस्मृतिबोधित्वं निगमयन् वीणावादनस्य शिष्टांगीकृतत्वादपि अंगीकारं विधत्ते—श्रुत्येति ॥ संतः संतोषाणां ऐहिकामुष्मिकसुखानां यः पोषो वृद्धिस्तदर्थं वीणां तद्वादनं अलयं अनवरतं कलयंतु सेवंतां ॥ कीदृशी ॥ श्रुत्या स्मृत्या दृष्टां अंतर्भावितण्यर्थतया दर्शितामिति ज्ञेयं ॥ रुद्रेष्टां शंकरप्रीतिकारिणीं ॥ तथा नारदादिभिर्जुष्टां सेवितां ॥ आदिशब्देन सरस्वतीतुंबरुगणादयो गृह्यंते ॥ वीणावादित्वं तेषां रुद्रस्य वीणानालंबी महती नारदस्य चेत्याद्युक्तेः ॥ ७ ॥

सार्धैकादशमुष्टिर्दंडः क्रियतेऽत्र तदुपरि च हित्वा ॥
अंगुलपंचकमेकं रंध्रे तिर्यक् चलच्छंकोः ॥ ८ ॥

एवं वीणाप्रशंसां निरूप्य प्रकृतोपयुक्तं तस्याः समुदितलक्षणमाह सप्तभिः । तत्र दंडं लक्षयति—अत्र वीणायां दंडः सार्धाः एकादशमुष्टयो यस्य मानत्वेन सः तादृशः क्रियते । षट्चत्वारिंशदंगुलः कार्य इत्यर्थः । क्रियते इति सर्वत्र संबध्यते । अत्र तु देशी संसिद्धमित्युपक्रम्य तिर्यग्यवोदरैः षड्भिर्निस्तुषैः स्यादिहांगुलमिति शार्ङ्गदेवोक्त्या तादृशं अंगुलं ज्ञेयं तावच्च सुषिरं दधदंतरा ॥ षडंगुलोत्र परिधिरित्यादिकया च तस्यैवोक्त्या दंडस्यांतः पुष्कलत्वपरिधी च ज्ञेयौ ॥ वैणवः खादिरो वापि रक्तचंदनजोपि वा ॥ कांस्यजो वा भवद्दंड ऋजुः श्लक्ष्णो व्रणोज्झित इति संगीतराजकुंभकर्णोक्त्यापि तादृशो दंडो ज्ञेयः ॥ कीलकरंध्रे लक्षयति—तदुपरि चेति ॥ तदुपरि दंडस्योर्ध्वेऽग्रभागे अंगुलपंचकं हित्वा तावन्मानप्रदेशं त्यक्त्वा चलन् पुनः पुनर्भ्राम्यमाणो यः शंकुः खादिरादिरूर्ध्वतंत्रीबंधनकीलस्तत्संबंधि एकं तिर्यक् तिरश्चीनं रंध्रं क्रियते ॥ तच्च रंध्रं चोभयतोमुखमिति शार्ङ्गदेवोक्त्या उभयतोमुखं ज्ञेयम् ॥ ८ ॥

ऊर्ध्वं तंत्रीसुषिरवदपरं षडंगुले त्वचलशंकोः ॥

**तिर्यङ्मात्रं तस्मान्मेढक ऊर्ध्वोऽगुलात्परतः ॥ ९ ॥**

कीदृशं तत् ऊर्ध्वं तंत्रीसुषिरवत् । उपरि तंत्रीछिद्रयुक्तं ॥ तिर्यग्रंध्रस्याप्युपरि एकदेशे ऊर्ध्वं तंत्रीप्रवेशाय अपरं अणु रंध्रं कार्यमित्यर्थः । अपरं तु द्वितीयं रंध्रं तु अचलः स्थिरो यः शंकुः चलशंकुदार्ढ्याय आकर्षकलोहकीलकबंधनाधारः तत्संबंधिषष्ठेंगुले क्रियते । मध्ये पंचांगुलानि परित्यज्य षष्ठे कार्यमित्यर्थः ॥ कीदृशं तत् । तिर्यङ्मात्रं तिर्यगेव न तु प्रथमरंध्रवत् ॥ ऊर्ध्वं तंत्रीछिद्रयुक्तमित्यर्थः ॥ एतदपि उभयतोमुखं ज्ञेयम् ॥ द्वे अपि रंध्रे कनिष्ठाग्र स्थौल्ये च ज्ञेये ॥ कीलौ षडंगुलदैर्ध्यौ पृथुलाशिरसौ तत्र चलस्तु गले बहुच्छिद्रो मुनिवचनात् ज्ञेयः ॥ एवं कीलावपि लक्षितौ ॥ मेरुं लक्षयति—**तस्मादिति** ॥ तस्मात् स्थिरशंकुच्छिद्रात् अंगुलात् परतः ऊर्ध्वः मेढकः ॥ ऊर्ध्वतंत्रिकाधारो मेर्वाख्यः क्रियते ॥ तच्छिद्रादंगुलमतिक्रम्य अनुमानेन दंडपृष्ठमध्ये उच्चो मेरुः स्थाप्य इत्यर्थः ॥ अत्र करोतिः कुरु करे गुरुमेकमयोघनमितिवत् स्थापनार्थः ॥ स च वक्ष्यमाणककुभलक्षणानुसारेण दंडात् यवन्यूनद्व्यंगुलोच्चः चतुरंगुलविपुलश्च ज्ञेयः ॥ ९ ॥

**तुंबं तदधोंगुलतोऽष्टाविंशत्यंगुलांतरेणान्यत् ॥**
**नाभिद्वयं सुवृत्तं सच्छिद्रं त्र्यंगुलोच्चततम् ॥ १० ॥**

तुंबे लक्षयति—**तुंबमिति** ॥ तदधः मेरोः अधोभागे अंगुलतः पारमिति शेषः ॥ तुंबं अलाबुफलं प्रथममिति शेषः क्रियते ॥ अनुमितान्मेर्वधोभागात् अंगुलमतिक्रम्य एकं तुंबं स्थापनीयमित्यर्थः ॥ तद्बंधनक्रिया त्वग्रे वक्ष्यते ॥ अन्यत् द्वितीयं तुंबं अष्टाविंशत्यंगुलान्तरेण क्रियते ॥ अष्टाविंशत्यंगुलान्यतिक्रम्य एकोनत्रिंशत्तमेऽगुले स्थाप्यत इत्यर्थः ॥ नाभी लक्षयति—**नाभिद्वयमिति** ॥ नाभी तुंबवृंत्तभागस्थे दंडाश्लिष्टे काष्ठादिनिर्मितचक्रिके तयोर्द्वयं सुवृत्तं अतिवर्तुलं सच्छिद्रं मध्ये ऊर्ध्वाधोमुखरंध्रयुक्तत्र्यंगुलं उच्चं उच्छ्रितं च तत

ततं विस्तीर्णं च तादृशं क्रियते ॥ ते च अधोभागांतर्गतगर्ते मध्यक्रूशे ऊर्ध्व-
भागांतर्गतपूर्वपश्चिममुखगर्ते च ज्ञेये ॥ १० ॥

**ककुभो द्व्यंगुलमुच्चश्चतुरंगुलदीर्घविपुलमसृणशिराः ॥**
**वीणादंडांतर्गतदंडोधः पक्ष उत्कीलः ॥ ११ ॥**

ककुभं लक्षयति,—**ककुभ इति** । ककुभो दंडाधोभागाग्रगतं तंत्रीबंधना-
धारभूतं काष्ठशकलं । एवं क्रियते । कीदृक् । द्व्यंगुलं उच्चः । वीणादंडादंगुल-
द्वयमुच्छ्रितः । तथा चतुरंगुलं दीर्घं लंबं च तत् विपुलं विस्तृतं च तादृशं म-
सृणं श्लक्ष्णं शिर उपरिभागो यस्य सः । तथा वीणादंडांतर्गतः वीणादंडस्य
मध्ये प्रविष्टः दंडो यस्य सः । सोऽस्य दंडः ॥ पंचांगुलश्चतुरंगुलो वा ज्ञेयः ।
तथा अधः दंडानुसारिणोः पार्श्वभागयोः पक्षौ पक्षिपक्षाकारौ उन्नतावयवौ
यस्य सः । तथा उत् उद्गताः कीलाः तंत्रीणां बंधनाधारभूताः ह्रस्वलोहशंकवो
यस्मिन् सः ॥ ११ ॥

**मेरोरुच्चः किंचित्स्वदक्षिणतुरीयतंत्रिकास्थाने ॥**
**उच्चोच्चान्यत्त्रिपदः सचतुरयः पत्रमूर्धांशः ॥ १२ ॥**

तथा मेरोः मेढकात् किंचित् यवमात्रं उच्चः । कस्मिन्प्रदेश उच्च इत्य-
त्राऽऽह—**स्वदक्षिणेति** । स्वस्य वादकस्य दक्षिणं दक्षिणहस्तगं यत् तुरीयतंत्रि-
कायाः उर्ध्वस्थचतुर्थतंत्र्याः स्थानं पदं तत्र उच्चः । तथा च उच्चात् उ-
च्चानि उच्चोच्चानि अन्यानि त्रीणि पदानि यस्य सः तत्र चतुर्थतंत्रीपदापे-
क्षया तृतीयतंत्रीपदं किंचिदुच्चं । ततो द्वितीयतंत्रीपदं किंचिदुच्चं ततोऽपि
प्रथमतंत्रीपदं किंचिदुच्चमित्यर्थः । तथा चतुर्भिः अयःपत्रैः लोहपात्रिकाभिः
सहिताः सचतुरयः पत्राः तादृशाः मूर्धांशः उपरिभागो यस्य सः ॥ लोहप-
त्राणि [illegible] संश्लिष्टानि मध्ये कूर्मपृष्ठोन्नतानि ककुभोच्चत्वांतर्गतानि च
ज्ञेया[illegible] र्ध्व तंत्रीक्रा अपि लक्षिताः ॥ १२ ॥

**दृढवेणुजाणुजीवोऽथ सारिका मेरुककुभवद्विपुलाः ॥**
**एकादशांगुला लघुसारीदशकक्षमा पट्टी ॥ १३ ॥**

तथा दृढवेणुजाः पक्ववंशत्वगुद्भवा अणवः अल्पीयस्यः जीवाः तंत्रीपत्रिकयोरंतर्गताः तयोः संश्लेषे संदेहकारिण्यः नादातिशयहेतवः कलाख्या यस्मिन् सः । एवं जीवा अपि लक्षिताः । सारिकाः लक्षयति—**अथ सारिका इति** ॥ सारिकाः लोहादिनलिकाः । गृध्रवक्षोऽस्थिनलिका यद्वा तच्चरणास्थिजाः ॥ आयस्यः कांस्यमय्यो वा नलिकाः सारिकाभिधा इति **निःशंकोक्तेः** । उपचारात्तु तदाधारभूताः काष्ठादिनिर्मितपट्टिकाः दंडपृष्ठस्थिता लोके उच्यंते सारी इति भाषायां ॥ ता मेरुककुभवद्विपुलाः क्रियंते ॥ मेरुककुभाभ्यां विस्तारे समा इत्यर्थः ॥ ताश्च यथा तंत्रीं न स्पृशंति तथा दग्धवस्त्रमिश्रितेन सिक्थकेन दंडे श्लेष्या इति ज्ञेयम् ॥ पट्टिकां लक्षयति–**एकादशेति** ॥ पट्टी शाकादिकाष्ठनिर्मिता दंडपृष्ठस्थिता पट्टिका एकादशांगुला क्रियते । कीदृशी । लघूनां पूर्वापेक्षया ऱ्हस्वानां सारीणां यः दश परिमाणमस्येति दशकस्तस्य क्षमा योग्या दशलघुसारिकाः यस्यां स्थाप्यंत इत्यर्थः । दशक इति संख्यायाः संज्ञासंघेति कन् ॥ १३ ॥

**तुंबाग्रमनुगताग्रा बंधार्थं दोरकास्त्रिदृढास्त्रिगुणाः ॥**
**तुंबादिबंधनादि तु लोकात्स्याद्रुद्रवीणेति ॥ १४ ॥**

पुनः कीदृशी पट्टी ॥ तुंबाग्रं अनु द्वितीयतुंबवृंतभागं लक्षीकृत्य गताग्रा दंडपृष्ठे अनुमानेन स्थापितद्वितीयप्रांता इत्यर्थः ॥ यथा तुंबं नोल्लंघयेत् ॥ तथा दीर्घसारीसन्निधौ स्थापितेति यावत् ॥ दोरकान् लक्षयति—**बंधार्थमिति** ॥ दोरकाः कार्पाससूत्रेण पट्टसूत्रेण वा निर्मिता रज्जवः त्रिगुणाः त्रिवृताः क्रियंते दृढाः सार्धहस्तामिताश्च ज्ञेयाः । अवशिष्टं लक्षयति–**तुंबादीति** । तुंबादिबंधनं तुंबनाभितंत्रीबंधनं आदिर्यस्य कर्मणः तत्तु लोकात् क्रियते ॥ तुंबबंधनं यथा—द्विगुणां दृढां स्नायुमयीं तंत्रीं लघुलोहकीलेन सह दंडाधःस्थ-

रंध्रे प्रवेश्य अवष्टभ्य च ततस्तां दंडाधःश्लिष्टनाभ्याश्छिद्रे तुंबाग्रच्छिद्रे च प्रोतां तुंबान्तर्गतवेणुशकलादौ निबध्य युक्त्या यावद्दृढबंधं तुंबं भ्रामयेदिति बंधनादिक् । तंत्रीबंधनं च यथा ककुभकीलनिबद्धैकप्रांतायास्तंत्र्याः अपरप्रांतं दोरकाग्रे निबध्य दोरकतंत्रीसंधिं रज्ज्वंतरेणाकृष्य दोरकेण तंत्रीसहितं दंडपृष्ठं त्रिश्चतुर्वा अग्रे अग्रे संवेष्ट्य ततः दोरकप्रांतं तंत्र्याः अधोभागेन वेष्टनानामुपरि नीत्वा आकर्षणरज्जुकृतच्छिद्रेण प्रवेश्य दोरकं यावद्दृढबंधं आकृष्य वेष्टनं यथायथं आकर्षयेत् ॥ उपरितनचतुर्थतंत्रीबंधने तु तस्या एकप्रांतं ककुभकीले निबध्य द्वितीयं प्रांतं चलशंकुच्छिद्रोर्ध्वगतरंध्रेण दंडांतर्गतचलशंकोर्मध्यरंध्रे युक्त्या प्रवेश्य ग्रथयित्वा चलशंकुं तंत्रीदार्ढ्यं यावद्भ्रामयेत्ततः स्थिरशंकुं निबद्धवक्रलोहकीलाग्रं चलशंकोर्गलच्छिद्रेषु अन्यतमरंध्रे अवष्टंभयेत् ॥ तेन चलशंकोः स्थैर्यं भवति ॥ एवं लोकत एव कीललक्षणं तंत्रीसंधानादि च ज्ञेयं । एवं लक्षितां रुद्रवीणां निगमयति—**स्याद्रुद्रवीणेति** ॥ क्रियत इति सर्वत्रसंबंधा क्रिया ॥ दीपकमलंकारः ॥ १४ ॥

**उक्ताऽत्र शुद्धमेलाऽथ मध्यमेलेति सा द्विधा साऽपि ॥**
**पुनरेकैकं द्विविधा तत्राखिलरागमेलैका ॥ १५ ॥**
**अपरैकरागमेला तत्राऽऽद्या भेदयोरवांतरयोः ॥**
**स्थानत्रयेऽपि यत्राखिलरागोर्हस्वराः सार्यः ॥ १६ ॥**

एवं सामान्येन रुद्रवीणां लक्षयित्वा तद्विशेषान् वक्तुं प्रतिजानाति—**उक्ताऽत्रेति** सपादया आर्यया ॥ अत्र अस्मिन् प्रकरणे सा रुद्रवीणा शुद्धमेला मध्यमेला चेति द्विधा उक्ता ॥ अथ इति चार्थे ॥ साऽपि द्विविधाऽपि पुनः एकैकं प्रत्येकं द्विविधा ॥ तत्र तयोः अवांतरभेदयोर्मध्ये एका अखिलरागमेला एकरागो विशिष्टरागसंबंधी मेलो यस्यामित्यर्थः ॥ शुद्धमेला अखिलरागमेला इत्येकः शुद्धमेला एकरागमेला इति द्वितीयः ॥ मध्यमेला अखिलरागमेला इति तृतीयः ॥ मध्यमेला एकरागमेला इति चतुर्थो भेदः । तत्र यथोद्देशं लक्षणं

कर्तव्यमिति न्यायात् । यद्यपि शुद्धमेलामध्यमेले प्रथमं लक्ष्ये तथापि अवांतरभेदौ अल्पवक्तव्यत्वात् सूचीकटाहन्यायेन प्रथमं लक्षयति—**तत्राऽऽद्येति** । तत्र तयोः अवांतरयोः भेदयोः उपभेदयोर्मध्ये आद्या अखिलरागमेला सा इत्यर्थात् । सा का यत्र यस्यां वीणायाम् स्थानत्रयेपि मंद्रमध्यतारस्थानेष्वपि अखिलरागार्हाः सर्वरागप्रकाशनयोग्याः स्वराः शुद्धा विकृताश्च षड्जादयो याभ्यः तादृश्यः सार्यो भवन्तीति शेषः ॥ यत्र पूर्वमेव स्थापिताधिकसारिकत्वात् सारिचालनं विना सर्वरागोत्पत्तिः ॥ सा अखिलरागमेलेत्यर्थः ॥ वज्रथाट इति भाषायाम् ॥ १५ ॥ १६ ॥

**साऽन्या यत्र यथार्हं रागव्यक्त्यै मुहुश्चलंतीमाः ॥**
**अथ शुद्धमेलवीणेह लक्ष्यमनु लक्ष्यते प्रथमा ॥ १७ ॥**

सा अन्या द्वितीया एका रागमेला ॥ सा का यत्र इमाः सार्यः रागव्यक्त्यै परिनियतरागप्रकाशनार्थं मुहुश्चलंति तत्तस्थानादुद्धृत्य स्थानान्तरे स्थाप्यन्त इत्यर्थः । किं स्थानत्रयेऽपि नेत्याह यथार्हं यथायोग्यं । तेन शुद्धमेलायां तु मध्यतारस्थानयोरेव सारीचालनम् ॥ मन्द्रस्थाने तु अधिकसारी स्थापनया तच्चालनं नैव ॥ मध्यमेलायां तु मध्यस्थाने धैवतनिषादयोरेव सारीचालनं ॥ तारस्थाने तु सर्वत्रापि । सर्वस्मिन् मंद्रस्थाने अपंचमं च मध्यस्थाने अधिकसारीस्थापनया तच्चालनं नैव ॥ अतःपरं शुद्धमेलां लक्षयितुं प्रतिजानाति—**अथ शुद्धेति** ॥ प्रथमा पूर्वोद्दिष्टा मुख्या वा शुद्धमेलवीणा इह लक्ष्यं अनुवीणाया लोकस्थितिं अनुसृत्य लक्ष्यते ॥ यद्वा लक्ष्यप्रधानानि शास्त्राण्येतानि मन्वत इति **शार्ङ्गदेवोक्तेः** ॥ १७ ॥

**स्थाप्या मेरोरूर्ध्वं चतस्र इह तंत्रिका मिथो विषमाः ॥**
**दक्षिणपार्श्वे दांडे तिस्रश्चतस्रषु च वामाद्या ॥ १८ ॥**

तल्लक्षणमेव सोपत्तिकमाह—**स्थाप्या मेरोरि**त्याद्यार्याभिः षड्विंशतिमं-

ख्याभिः ॥ इह अस्यां शुद्धमेलायां मेरोः ऊर्ध्वं चतस्रा तंत्रिकाः स्थाप्याः त्रिभिर्दोरकैः कीलद्वयेन च पूर्वोक्तरीत्या बंधनीयाः ॥ अत्र मेरुस्थैर्यं लाक्षया दंडपृष्ठांतर्गताधःस्थकीलेन वा लोकतो ज्ञेयं ॥ कीदृश्यस्ताः मिथः परस्परं विषमाः विसदृश्यः । तत्र प्रथमा लोहमयी तंत्री गजकेशतः किंचित् स्थूला ॥ द्वितीया ततः कृशा । तृतीया कृशतरा ॥ चतुर्थी कृशतमेत्यर्थः । चपरं दांडे दंडसंबंधिनि दक्षिणपार्श्वे तिस्रः तंत्रिकाः स्थाप्या इति चात्रानुषज्यते ॥ दोरकत्रितयेन अन्यदपि तंत्रित्रयं दंडमध्यभागमनुसृत्य सार्यवकाशप्रदेशे पूर्ववद्बंधनीयमित्यर्थः ॥ एता अपि तिस्रः उपरितनादिक्रमेण पूर्ववन्मिथो विषमा ज्ञेयाः । एवं तंत्रीसप्तकस्थापनं निरूप्य मेरोरुपरिस्थासु तासु स्वरस्थापनं तावदाह—**चतसृष्विति** ॥ चतसृषु मध्ये वामा आद्या तंत्रीत्यग्रतोपकृष्यते स्कंधस्थायां वीणायां वादकस्य वामहस्तगा सती प्रथमेत्यर्थः ॥ १८ ॥

**अनुमंद्रषड्जमर्हेदनुमंद्रे पं द्वितीयका तंत्री ॥**
**मंद्रं सं च तृतीया चतुर्थिका मध्यमं मंद्रम् ॥ १९ ॥**

**अनुमंद्रषड्जमर्हेदिति** । अनुहीनो मंद्रोनुमंद्रान्नीच इति यावत् स चासौ षड्जः यद्वा अनुमंद्रे मंद्रस्य पश्चाद्भागे यः षड्जः यस्माद्द्विगुणो मंद्रषड्ज- इति यावत्। तं अर्हेत् प्राप्तुं योग्या स्यात् ॥ अर्हेदिति आर्याद्वयेऽपि संबध्यते ॥ रंजकः सन् अणुरणनात्मको ध्वनिविशेषो यस्मात् पूर्वमन्यो न संभवति तादृग्लक्षणोऽनुमंद्रषड्जो यथा उदीयात् तथा प्रथमतंत्री शिथिलं बंधनीयेत्यर्थः। द्वितीयका च तंत्री अनुमंद्रे वर्तमानमिति शेषः ॥ पं पंचमं अर्हेत् ॥ अनुमंद्रषड्जापेक्षया प्रथमविवेकोक्ताभ्योऽनुमंद्रश्रुतिभ्यो द्वादशभ्यः परस्त्रयोदशोनुमंद्रपंचमाख्यो ध्वनिभेदो यथा उदीयात् तथा द्वितीयतंत्री प्रथमायाः किंचिद्दृढं बंधनीयेत्यर्थः । तृतीया च तंत्री मंद्रं सं षड्जजं अनुमंद्रषड्जाद्द्विगुणमिति यावत् ॥ अर्हेत् ॥ मंद्रषड्जो यथा उदीयात् तथा सा द्वितीयस्या अपि किंचिद्दृढं बंधनीयेत्यर्थः ॥ चतुर्थिका मध्यमं मंद्रमर्हेत् ॥ मंद्रषड्जापेक्षया अ-

ष्टाभ्यो श्रुतिभ्यः परो नवमो मंद्रमध्यमाख्यो ध्वनिभेदो यथा उदीयात् ॥ तथा तृतीयस्या अपि किंचिद्दृढा सा च कीलभ्रामणेन कार्येत्यर्थः । अनुमंद्र-षड्जमिति विशेषणं विशेष्येणेति तत्पुरुषगर्भस्तत्पुरुषः ॥ यद्वा अव्ययीभावगर्भः सप्तमीतत्पुरुषः ॥ अनुमंद्र इति पश्चादर्थेऽव्ययं विभक्तीत्यादिनाऽव्ययीभावः ॥ तृतीयासप्तम्योरिति पक्षे अमभावश्च ॥ १९ ॥

**पार्श्वेतूपरिगाद्या मंद्रं सं मध्यमा च मंद्रं पम् ॥**

**अंत्या मध्यं षड्जं श्रुत्याख्यास्तिस्र एताः स्युः ॥ २० ॥**

**सति वा षड्जे श्रुतयो मंद्रे मध्ये क्रमात्सकृद् द्विश्च ॥**

**यद्वा षड्जे मंद्रे मध्ये तारे तथा ताः स्युः ॥ २१ ॥**

दंडपार्श्वस्थतंत्रीष्वपि स्वरस्थापनमाह—**पार्श्वेत्विति** ॥ पार्श्वे दंडपार्श्वे तु उपरिगा उपरि स्थिता सती आद्या प्रथमा तंत्री मंद्रं सं षड्जं अर्हेत् ॥ मेरुस्थतृतीयतंत्र्या समध्वनिः कार्येत्यर्थः ॥ मध्यमा च तंत्री मंद्रं पं पंचमं अर्हेत् ॥ मेरुस्थद्वितीयतंत्रीध्वनिना द्विगुणसमानध्वनिः कार्येत्यर्थः ॥ अंत्या मध्यं षड्जं अर्हेत् ॥ दंडस्थप्रथमतंत्रीध्वनिना द्विगुणसमानध्वनिः कार्येत्यर्थः ॥ एतत्तंत्रीत्रयस्य प्रत्येकं लौकिकीसंज्ञामाह—**श्रुत्याख्या इति** ॥ तिस्र एताः दंडपार्श्वगाः तंत्र्यः श्रुत्याख्याः स्युः ॥ श्रुतिसंज्ञया लोके व्यवह्रियंत इत्यर्थः ॥ २० ॥ प्रकारांतराभ्यां तास्वेव स्वरस्थापनमाह—**सति वेति** ॥ वा अथवा मंद्रे षड्जे सकृत् एकवारं मध्ये च षड्जे द्विः द्विवारं सति श्रुतयः क्रमात्स्युः उपरितनश्रुतौ मंद्रषड्जः मध्यमायां अधस्तन्यां च मध्यषड्ज इत्यर्थः ॥ यद्वा मंद्रे मध्ये तारे च षड्जे क्रमात् उपरितनादिक्रमेण सति ताः श्रुतयः स्युः ॥ तारोऽत्र मध्याद्विगुणत्वात् ह्रस्वतमं तंत्र्यां बोद्धव्यः ॥ क्रमात्स्युरिति वोभयत्र संबध्यते । तथेतिचार्थे ॥ २१ ॥

**अनुमंद्रषड्जतंत्र्या पट्सारीः स्थापयेद्यथा स्युरिमे ॥**

शुद्धरिशुद्धगसाधारणमृदुमशुचिममृदुपसंज्ञाः ॥ २२ ॥

पूर्वं मेरुस्थं तंत्रीचतुष्टये षड्जपंचमं षड्जमध्यमेति क्रमेण स्वरस्थापनमुक्तं इदानीं तस्मिन्नेव तंत्रीचतुष्टये अधः सारिका षड्जस्थापनहेतुकमवशिष्टस्वरस्थापनं वदन् प्रथमतंत्र्यां षट्सारीस्थापनेन अनुमंद्रे षट् स्वरानाह— **अनुमंद्रेति** ॥ अनुमंद्रषड्जस्य या तंत्री तस्यां इमे षट्स्वराः यथा स्युः स्वस्वश्रुतिस्थतया प्रकाशेरन् तथा षट्सारीः स्थापयेत् ॥ इमे के ता आह— **शुद्धरीति** ॥ तत्र अनुमंद्रषड्जात्परस्य अनुमितायां तृतीयश्रुतौ यथा शुद्धरिः स्यात् तथा प्रथमसारी स्थाप्येत्यर्थः ॥ तस्मात् शुद्धऋषभात् द्वितीयश्रुतौ शुद्धगः स्यात्तथा द्वितीयसारी ॥ तस्मात् शुद्धगान्धारात् मध्यमस्य प्रथमायां श्रुतौ यथा साराणः स्यात् तथा तृतीयसारी ॥ तस्मान्मध्यप्रथमश्रुतिस्थगांधारात् तु द्वितीयश्रुतौ यथा मृदुमः स्यात्तथा चतुर्थसारी ॥ तस्मान्मध्यमोपांत्यश्रुतिस्थगांधारात् प्रथमश्रुतौ यथा शुचिमः स्यात्तया पंचमसारी ॥ तथा-तस्मादेव शुद्धमध्यमात् तृतीयश्रुतौ यथा मृदुपसंज्ञः मध्यमः स्यात्तथा षष्ठसारी च स्थाप्येत्यर्थः । एताः षट् अनुमंद्रा एव ज्ञेयाः ॥ २२ ॥

**अनुमंद्रपस्य तंत्र्यां स्युरिमे तास्वेव षट्सु सारीषु ॥**
**शुद्धधशुद्धनिकैशिकिमृदुसशुचिसशुद्धऋषभाख्याः ॥ २३ ॥**
**शुद्धौ सरी इमौ न ग्राह्यौ तंत्र्या तृतीयया जननात् ॥**
**अनुमंद्रसतंत्री वा मंद्रसतंत्र्यां स्वरास्तेषु ॥ २४ ॥**
**त्याज्या शुद्धमम‍ृदुपाविमौ चतुर्थ्यां समुद्भवाद् भूयः ॥**
**मंद्रमतंत्र्यां त्वित्थं सारीषु स्युः स्वरास्तासु ॥ २५ ॥**

तत्रैव सारीषट्के द्वितीयतंत्र्यां क्रमेण स्वराविर्भावमाह ॥ **अनुमंपद्रस्येति** ॥ शुद्धधादयः शुद्धऋषभांताः आख्या येषां ते तथोक्ताः ॥ तत्र स्वतृतीयश्रुतिस्थशुद्धधः शुद्धधैवतः प्रथमसार्यां उदयेत्॥ द्वितीयश्रुतिस्थशुद्धनिः शुद्धनिषादः॥

द्वितीयसार्यां कैशिकीषड्जप्रथमश्रुतिस्थो निषादः ॥ तृतीयसार्यां मृदुसःषड्जोपांत्यश्रुतिस्थो निषादः। चतुर्थ्यां शुचिसः शुद्धषड्जः। पंचमसार्यां शुद्धऋषभः स्वतृतीयश्रुतिस्थः। षष्ठसार्यां च उदयेदित्यर्थः ॥ शिष्टं स्पष्टं ॥ तत्र शुद्धधशुद्धनिकैशिकिमृदुसाः अनुमंद्रे ज्ञेयाः ॥ शुचिसशुद्धऋषभौ तु मंद्रे ॥ शुद्धधादयः संज्ञा येषामिति बहुव्रीहिर्वा ॥२३॥ तत्र अंतिमौ द्वौ मंद्रौ प्रयोगे न वादनीयावित्याह—**शुद्धसरी इति** ॥ इमौ द्वितीयतंत्रीस्थौ शुद्धौ सरी न ग्राह्यौ कुतः तृतीयया तंत्र्या करणेन जननात् पुनरपीति शेषः ॥ तंत्र्यां तृतीयायां मंद्रौ शुद्धषड्जऋषभौ पुनरपि उदयत इति तावेव वादनीयौ नतु पूर्वौ मंद्रध्वनित्वादित्यर्थः ॥ प्रथमतंत्रीवत् तृतीयतंत्र्यां तास्वेव सारीषु शुद्धरिशुद्धगसाधारणमृदुमशुद्धममृदुपाः क्रमेण ज्ञेया इत्याह—**अनुमंद्रसतंत्रीवन्मंद्रसतंत्र्यां स्वरा इति** ॥ स्पष्टम् ॥ किंतु तंत्रीभवाः शुद्धऋषभादयः अनुमंद्रे । एते तु शुद्धऋषभादयः मंद्र इति विशेषः ॥ एष्वपि षट्सु अंतिमौ द्वौ प्रयोगे त्याज्यावित्याह—**तेष्विति** ॥ तेषु शुद्धऋषभादिषु इमौ मंद्रौ शुद्धममृदुपौ त्याज्यौ ॥ कुतः चतुर्थ्यां भूयः समुद्भवात् ॥ मंद्रमतंत्र्यां पुनरपि शुद्धमध्यमृदुपंचमयोर्मंद्रयोरुत्पत्तेरित्यर्थः ॥ चतुर्थतंत्र्यां तास्मिन्नेव सारीषट्कस्वराविर्भानमाह—**मंद्रमतंत्र्यां त्विति**। अस्यां तु तासु सारीषु इत्थं अनेन प्रकारेण स्वराः स्युः ॥२५

**आद्या द्वितीययोस्तो मृदुपोज्ज्वलपौ तृतीयकां त्यक्त्वा ॥**
**तुर्यायां शुद्धो धः शुद्धो निः स्याच्च पंचम्याम् ॥ २६ ॥**
**षष्ठ्यां च मृदुः षड्जः कैशिक्यर्थं परांतरा सारी ॥**
**मेरौ च प्रतिसारि स्वरस्थितिरियं प्रमाणं हि ॥ २७ ॥**

तमेव प्रकारमाह—**आद्या द्वितीययोरिति**। मृदुपोज्ज्वलपौ मृदुपंचमशुद्धपंचमौ स्तः तत्र प्रथमसार्यां मृदुपः द्वितीयसार्यां शुद्धपंचम इत्यर्थः ॥ तृतीयकां तृतीयसारीं त्यक्त्वा तुर्यायां चतुर्थ्यां शुद्धो धः शुद्धधैवतः ॥ स्यादिति सर्वत्र संबध्यते ॥ तृतीयायां तु न कोऽपीत्यर्थः ॥ पंचम्यां तु निः शुद्धनिषादश्च

स्यात् ॥ २६ ॥ षष्ठ्यां षष्ठसार्यां च मृदुः षड्जः स्यात् ॥ कैशिकिनः सारीमाह—कैशिकिनः प्रादुर्भावाय अंतरा निषादमृदुषड्जसार्योर्मध्ये परा अन्या सारी स्यात् सा तु निषादसार्याः समीपे स्थाप्येत्यर्थः ॥ एवं च सप्त सार्यो भवंति ॥ ननु प्राचीनैरेवं साक्षादनुपदिष्टत्वादेतादृश्येव स्वरस्थितिरिति कुतः इत्याशंक्याऽऽह—**मेरौ चेति** ॥ मेरौ मरुके प्रतिसारी सार्यां सार्यां च इयं तंत्रीचतुष्टये स प स म रि ध रि मृदुपादिरूपा स्वरस्थितिः ॥ स्वरस्थापनं प्रमाणं युक्ता मान्येति यावत् ॥ हिरेवार्थे॥ प्रमाणमित्यजहल्लिंगं स्त्रीविशेषणम् ॥ स्थितिरित्यंतर्भावितण्यर्थस्तिष्ठति ॥ २७ ॥

**संवादिनां समाजो रंजनकारी भवेदिति न्यायात् ॥**
**ध्वनितं निःशंकादिभिरिहापि संवादिसान्निध्यम् ॥ २८ ॥**
**सपसममुख्याः संवादिनः स्वरा एकसंश्रयाः प्रायः ॥**
**श्रुतयो द्वादश वाऽष्टौ तेषामंतर्यतः संति ॥ २९ ॥**

तत्र हेतुमाह—**संवादिनामिति** ॥ संवादः एककार्यत्वं एषामस्ति तादृशानां समाजः समूहः सहावस्थितिरिति यावत् । रंजनकारी रंजको भवेत् इति न्यायात् लोकप्रघातः॥ शास्त्रेऽपि प्राचीनानुमतिमत्राऽऽह—**ध्वनितमिति**॥ निःशंकादिभिः शार्ङ्गदेवप्रमुखैरपि इह शास्त्रे संवादिनोः स्वरयोर्यत् सान्निध्यं राजामात्यवत् कार्यसिद्धये सहावस्थानं ध्वनितं सूचितं ॥ तथा च शार्ङ्गदेवः—वादी राजाऽत्र गीयते ॥ संवादी त्वनुसारित्वादस्यामात्योऽभिधीयत इति॥२८ शास्त्रीयं परस्परसंवादित्वमेव अस्यां स्वरस्थापनायामिति सहेतुकमाह—**सपसममुख्या इति** ॥ एकः संश्रयः आधारः मेरुः सारिका वा येषां ते सपसममुख्याः सपसमरिधरिमृदुपादयः प्रायः बाहुल्येन संवादिनः ॥ संवादित्वे हेतुमाह—**श्रुतय इति** ॥ द्वादश अष्टौ वा श्रुतयस्तेषां सपसमादीनां अंतः मध्ये संति यतः ॥ तथा च निःशंकः—श्रुतयो द्वादशाष्टौ वा ययोरंतरगोचराः ॥ मिथः संवादिनौ तौ स्त इति ॥ यद्यपिद्वयोर्द्वयोरेव मध्ये श्रुतिविचारस्तथापि

तेषामिति बहुत्वं अनेकयुग्मापेक्षया ॥ प्रायःपदेन क्वचिदेव संवादित्वं नेति सूचितं ॥ तत्र तंत्रीचतुष्टयेन मेरौ उदितेषु सपसमेषु मध्ये अनुमंद्रसानुमंद्रपयोः ॥ अनुमंद्रपमंद्रसयोः मंद्रसमंद्रमयोश्च संवादित्वं प्रथमसार्यां रिधरिमृदुपेषु सपसमेषु मध्ये अनुमंद्रसानुमंद्रपयोः अनुमंद्रपमंद्रसयोः मंद्रसमंद्रमयोश्च संवादित्वं ॥ प्रथमसार्यां रिधरिमृदुपेषु मध्ये अनुमंद्रऋषभानुमंद्रधयोः अनुमंद्रधमंद्रऋषभयोः मंद्रऋषभमंद्रमृदुपयोश्च संवादित्वं ॥ द्वितीयसार्यां गनिगपेषु मध्ये अनुमंद्रगानुमंद्रनिषादयोः अनुनुंद्रनिषादमंद्रगयोश्च संवादित्वं ॥ यस्य तु गेन नास्ति ॥ तृतीयसार्यां साधारणकैशिकिसाधारणेषु मध्ये अनुमंद्रसाधारणानुमंद्रकैशिकिनोः अनुमंद्रकैशिकिमंद्रसाधारणयोश्च संवादित्वं ॥ अत्र चतुर्थ एव नास्ति ॥ चतुर्थसार्यां ॥ मृदुममृदुसमृदुमधैवतेषु मध्ये अनुमंद्रमृदुमानुमंद्रमृदुसयोः अनुमंद्रमृदुसमंद्रमुदृमयोश्च संवादित्वं ॥ धस्यापि नास्ति ॥ पंचमसार्यां मसमानिषुमध्ये अनुमंद्रममंद्रसयोः मंद्रसंमंद्रन्योश्च संवादित्वं ॥ षष्ठसार्यां मंद्रः कैशिक्येव ॥ सप्तमसार्यां मृदुपऋषभमृदुपमृदुसेषु मध्ये अनुमंद्रमृदुपमंद्रऋषभयोः मंद्ररिमंद्रमृदुपयोः मंद्रमृदुपमंद्रमृदुसयोश्च संवादित्वम् ॥ २९ ॥

**किंच स्वभुवः सपमा नियतश्रुतयोऽपि कल्पिता नो तु ॥**
**वच्मि स्फुटमिह हेतुं सारीतंत्र्योर्विना श्लेषम् ॥ ३० ॥**
**अपरस्तुरीयतंत्र्यां द्वितीयसार्यूर्ध्वमणुरवोऽस्ति समः ॥**
**तन्मंद्रपः स्वयंभूर्मध्ये च समध्यमौ स्वभुवौ ॥ ३१ ॥**

एवं संवादित्वेन तादृक्स्थापनायां प्रामाण्यमुक्त्वा तत्तन्निजश्रुतिमानेन स्थापितानामपि सपसमानां तावत् स्वयंभूत्वेनापि प्रामाण्याह—**किंचेति** ॥ नियताः शास्त्रे एतावत्तया कल्पिताः श्रुतयो येषां तादृशा अपि सपमाः षड्जपंचममध्यमाः स्वस्मादेव भवंतीति स्वभुवः स्वप्रकाशाः ॥ नो तु कल्पिताः ॥ स्वयंभूत्वे स्पष्टं हेतुं वक्तुं प्रतिजानाति–**वच्मि स्फुटमिह हेतुमिति** ॥ स्पष्टम् । हेतुमेव प्रकटयति—**सारीतंत्र्योरिति** ॥ तुरीयतंत्र्यां मंद्रमध्यमतंत्र्यां द्वितीयसार्यूर्ध्वं मंद्रपंचमप्रकाशिकायाः सार्या उपरि सारीतंत्र्योः श्लेषं संघट्टनं

विना अपरो द्वितीयः समः तेनैव मंद्रपंचमेन तुल्यः अणुरवः सूक्ष्मो ध्वनिरस्ति यथा द्वितीयसार्यां तंत्रीसंघट्टनेन मंद्रपंचम उदेति तथा तस्या उपरि असंलग्नायामपि तंत्र्यां वामकरांगुलिस्पर्शमात्रेणापि अन्यो मंद्रपंचमः सूक्ष्मः श्रूयत इत्यर्थः ॥ तत्ततो हेतोः मंद्रपः मंद्रपंचमः स्वयंभूः चपरं मध्ये मौ मध्यस्थानस्थषड्जो मध्यस्थानस्थमध्यमश्च स्वयंभुवौ स्वप्रकाशौ ॥ ३१ ॥

**अष्टम्येकादश्योः सार्योरूर्ध्वं समापरध्वनितः ॥**
**तत्तैः समाः सपसमाः स्वयंभुवो मुक्ततंत्रीजाः ॥ ३२ ॥**

हेतुमाह—**अष्टम्येकादश्योरिति** ॥ एतयोः सार्योरूर्ध्वं समौ यौ अपरौ ध्वनी ततः ॥ मृदुषड्जापेक्षया एकश्रुतिमानेन स्थापितायाः अष्टमसार्या उपरि तस्यामेव तंत्र्यां तत्सारीश्लेषं विनापि पूर्ववत् मध्यषड्जांतरं स्पष्टमेव श्रूयते ॥ तथा तत्षजादुपरि तृतीयश्रुतिमानेन नवमी ऋषभसारी ततोऽपि द्वितीयश्रुतिमानेन दशमी गांधारसारी ततोऽपि चतुर्थश्रुतिमानेन एकादशी मध्यमसारी तस्या उपरि चतुर्थतंत्र्यामेव तत्सारीश्लेषं विनापि पूर्ववत् मध्येमध्यमांतरं च श्रूयते तस्माद्धेतोरिमौ च स्वयंभुवावित्यर्थः ॥ एकादशसारीस्थो मध्यमस्त्वेकरागमेलवीणायां सुबोधाय उक्तः ॥ अखिलरागमेलवीणायां तु त्रयोदशसारीस्थो मध्यमो भवेत् साधारणमृदुमध्यमसारीद्वयस्याप्यन्यस्य सद्भावात् ॥ एवं साधितेन मंद्रपादीनां स्वयंभुत्वेन मेरौ तंत्रीजनितानामपि सपसमानां स्वयंभुत्वं साधयति—**तत्तैरिति** ॥ तदिति मंद्रपमध्यसममध्यमानां स्वयंभूत्वाद्धेतोः तैः मंद्रपंचमादिभिः समाः सदृशनादाः मुक्ततंत्रीजाः मुक्ताः वामहस्तांगुलिश्लेषरहिताः याः तंत्र्यः प्रथमादयश्चतस्रः ताभ्यो जाताः सपसमाः अनुमंद्रषड्जानुमंद्रषड्जमंद्रमध्यमाः स्वयंभुवः ॥ ज्ञेया इति शेषः ॥ नीचोच्चस्थानकृत एवैषां भेदो न रूपभेद इत्यर्थः ॥ ३२ ॥

**ये रिधरिमृदुपमुख्यास्तन्मूलं स्थापिता यथाशास्त्रम् ॥**

तेऽपि स्वयंभुव इवाष्टम्यूर्ध्वे तिसृषु तंत्रीषु ॥ ३३ ॥
पूर्ववदपराच्च रवात् पगपैस्तत्रोचितैः समात्क्रमतः ॥
श्रुत्यैकयाऽधिकत्वं न्यूनत्वं वा न दोषाय ॥ ३४ ॥

एवं मेरुगतस्वयंभूस्वरपांक्तिप्रामाण्येन प्रथमद्वितीयादिसारीगतानामपि स्वरपंक्तीनां प्रामाण्यमाह—ये रिधरिमृदुपमुख्या इति ॥ रिधरिमृदुपाः मुख्याः आद्या येषां गनिगपादीनां ते ये यथाशास्त्रं शास्त्रोक्तस्वस्वश्रुतिमानेन तन्मूलं ते मेरुगतसपसमाः मूलं यस्मिन् कर्मणीतिताननुसृत्येति यावत् ॥ तथा स्थापिताः प्रथमादिसारीसप्तक इति शेषः ॥ तेऽपि स्वयंभुव इव प्रमाणभूता इति शेषः ॥ स्वयंभुवः सपसमाः यथा सप्रामाण्यास्तथा तदनुसारेण स्थापिता एतेऽपीत्यर्थः ॥ तत्र प्रथमसार्यां रिधरिमृदुपाः ॥ द्वितीयायां गनिगपाः ॥ तृतीयायां साधारणकैशिकिसाधारणाः ॥ तुरीयायां मृदुमसृदुसमृदुमधैवताः पंचम्यां मसमनिषादाः ॥ षष्ठ्यां कैशिकी एक एव । सप्तम्यां मृदुपऋषभमृदुपमृदुसाः । एवं पंक्तिसप्तकप्रामाण्ये हेत्वंतरमप्याह—अष्टम्यूर्ध्वमिति ॥ अष्टमी अनुमंद्रमृदुपमंद्रऋषभमंद्रमृदुपमंद्रमृदुसापेक्षया एकश्रुत्यनुमानेन अनुमंद्रपमंद्रपमंद्रपमध्यससिद्ध्यर्थं स्थापनीयाष्टमसारी तस्या ऊर्ध्वं उपरि पूर्ववत् चतुर्थतंत्र्यां तस्या एव सार्या उपरि तच्श्लेपं विना मध्यषड्जापरध्वनिवत् तिसृषु तंत्रीषु प्रथमाद्वितीयातृतीयासु अपरात् रवाच्च अन्यसूक्ष्मध्वननाच्च ॥ कीदृशात्? ॥ तत्र उचितैः अष्टमसामसार्यां योग्यैः पगपैः अनुमंद्रपंचममंद्रगांधारमंद्रपंचमैः क्रमतः समात् ॥ सादृशात् ॥ आद्यया मेरुगतस्वयंभूस्वरपंक्त्या अंत्यया अष्टमसारीगतस्वयंभूस्वरपंक्त्या च मध्यगतस्वरपंक्तीनां सर्वासामपि प्रामाण्यमिति भावः ॥ एतेषु स्थापितस्वरेषु क्वचन एकश्रुत्याधिकत्वन्यूनत्वे अपि रंजनहानिकरे न भवत इति ससंप्रदायमाह—श्रुत्यैकयेति ॥ एकया श्रुत्या अधिकत्वं न्यूनत्वं वा दोषाय न ॥ ३४ ॥

अनुमंद्रमंद्रतारेष्विति स्थितिरपि स्वरस्वरूपविदाम् ॥

स्वधिया मयेति गदितं तत्प्रामाण्यं निजानुभवात् ॥ ३५ ॥
अनुमंद्रमंद्रयोरिति ते द्वादशमेरुसारिकासूक्ताः ॥
तन्मानतः स्वराणां सार्योऽत्र च मध्यताराणाम् ॥ ३६ ॥

केषु ? अनुमंद्रमंद्रतारेषु ॥ मध्यस्थानस्थस्वरान्विना स्वरेषु ॥] इति स्वरस्वरूपविदामपि स्थितिः स्वरतत्त्वं जानतामपि व्यवहारः ॥ अनुमंद्रेत्यादिद्वंद्वे आनुपूर्व्येण पूर्वनिपातः ॥ इत्युक्तं स्वरप्रामाण्यं निगमयति—स्वधियेति ॥ मया इति तेषां स्थापितस्वराणां यत्प्रामाण्यं तत् निजानुभवात् स्वानुभवतः स्वधिया स्वबुद्ध्या गदितं ॥ एवं स्थापितान् अनुमंद्रमंद्रस्वरान् संख्यापूर्वं निगमयन् मध्यतारस्वरार्थमपि सारीस्थापनमाह—अनुमंद्रमंद्रयोरितीति ॥ अस्मिन्स्थानद्वये ते स्वराः मेरुसारिकासु मेरौ सारिकासु च द्वादश उक्ताः ॥ तत्र शुद्धाः सरिगमपधनयः सप्त विकृताः साधारणमृदुमृदुपकैशिकिमृदुसाः पंचेत्यर्थः ॥ अत्र अस्यां शुद्धमेलायां मध्यताराणां च सार्यः ॥ तन्मानतः तासां स्वस्वश्रुतीनां मानात् । अनुमानात् यद्वा तेषां अनुमंद्राणां मंद्राणां वा स्वराणां मानात् ध्वनिसादृश्येनेति यावत् ॥ ३६ ॥

स्थाप्याश्चतुर्दशान्येऽतितारषड्जार्थमपि परामाहुः ॥
मध्यास्ताराश्च परं तेन ग्राह्यास्तुरीयतन्त्रीजाः ॥ ३७ ॥
अन्तरकाकल्यौ तीव्ररिधौ तीव्रतममध्यमश्चेति ॥
पंच न किं द्वादशवत्सारीषूक्ता ब्रुवे तत्र ॥ ३८ ॥

चतुर्दश स्थाप्याः ॥ अन्ये केचित् इदानींतनाः परामपि पंचदशीमपि सारीं अतितारः तारमतिक्रांतस्ततोधिक इति यावत् । सचासौ षड्जश्च तदर्थं आहुः वदन्ति ॥ एतेन एकरागमेलाख्यैव शुद्धमेला असङ्कीर्णतायै उक्ता भवति ॥ अखिलरागमेलाख्यशुद्धमेलायान्तु अन्याः दशसारिकाः मतान्तरेण एकादश वा वक्तव्याः स्युः ॥ तदेवं एकरागमेलाख्यशुद्धमेलायां मेरुसहिताः

द्वाविंशतिः सार्थः मतान्तरे तु त्रयोविंशतिः ॥ एवमखिलरागमेलाख्यशुद्धमेलायामपि समेरवो द्वात्रिंशत् ॥ मतान्तरे तु त्रयस्त्रिंशत् यथास्वं सारिका उह्याः आहुरिति ब्रुवआहुश्चेति साधु ॥ एवं सकलस्वरार्थं सारीस्थापनं निरूप्य तंत्रीविशेषेण स्थानविशेषे स्वरवादनं **नियमय इति—मध्याइति** ॥ मध्यास्ताराश्च ते शुद्धविकृतस्वराः तुर्यतन्त्रीजाः परं चतुर्थं तंत्रीसमुत्था एव ग्राह्याः प्रयोज्याः न तु प्रथमद्वितीयतृतीयतन्त्रीजनिता इत्यर्थः॥ तासु अग्रेऽग्रे सारीतन्त्रीसंश्लेषवैषम्येण स्वरस्वरूपस्य मन्दत्वादितिभावः ॥ अत्र प्रथमविवेके शुद्धाः सप्तविकृताश्चतुर्दश स्वरा अवबोधिताः ॥ तत्र अनुमंद्रयोर्द्वादशस्वरसिध्यर्थं सारीस्थापने कश्चिदाशंकते—**अंतरकाकल्यौ इति** ॥ द्वादशवत् शुद्धसरिगमपधनिसाधारणमृदुममृदुपकैशिकिमृदुसाइव अन्तरकाकल्यौ तीव्ररिधौ तीव्रतममध्यमश्च इति क्यच् स्वराइति शेषः ॥ सारिषु किं न उक्ताः यथा द्वादशसिध्यर्थं समेरुसार्थः अष्ट स्थापिताः तथा अन्तरादिपञ्चकसिध्यर्थं अपरा अपि पञ्च न स्थापिता इति प्रश्नार्थः ॥ तत्र तत्र अन्तरो नाम मध्यमश्रुतिद्वयग्राही गान्धारः काकलीषड्जश्रुतिद्वयग्राही निषादः ॥ तीव्ररिः गान्धारादिमश्रुतिग्राही ऋषभः । तीव्रधः निषादादिमश्रुतिग्राही धैवतः ॥ तीव्रतममः पञ्चमश्रुतिद्वयग्राही मध्यमः ॥ प्रत्युत्तरं प्रतिजानाति—**ब्रुवे तत्रेति** ॥ स्पष्टम् ॥ ३८ ॥

**साधारणादिसारिष्वपकर्षादधिकिता यदा श्रुतयः ॥**
**पञ्च तदान्तरमुख्या इह स्युरिति ताः पृथङ्नोक्ताः ॥ ३९ ॥**

तदेवाह—**साधारणादिसारिष्विति** ॥ साधारणादीनां याः सार्यः तासु यदा अपकर्षात् वामहस्ताङ्गुल्या तन्त्र्याकर्षणात् श्रुतयः अधिकिताः अधिकाः कृताः तदा अन्तरमुख्याः अन्तरकाकल्यादयः पञ्च इह साधारणादिसारीष्वेव स्युः इति ताः पञ्च सार्यः पृथक् न उक्ताः ॥ तत्र प्रथमतंत्र्याः तृतीयतंत्र्याः तृतीयसार्यां यदा एकश्रुतिः अपकर्षात् अधिका कृता तदा तस्यामेव सार्यां मध्यमश्रुतिद्वयलाभात् ॥ अनुमंद्रमंद्रौ अन्तरावुत्पद्येते ॥ एवं

द्वितीयतंत्र्यास्तृतीयसार्यां चतुर्थतंत्र्याः षष्ठसार्यां च आकर्षणादेकश्रुत्यधिकीकरणेन षड्जश्रुतिद्वयलाभात् अनुमन्द्रमन्द्रे काकल्यौ उत्पद्येते ॥ एवमेव प्रथमतंत्र्याः तृतीयतंत्र्याश्च प्रथमसार्यां आकर्षणादेकश्रुत्यधिकीकरणेन गान्धारादिमश्रुतिलाभात् तीव्रऋषभौ अनुमन्द्रमन्द्रावुत्पद्येते ॥ तथा द्वितीयतंत्र्याः प्रथमसार्यां चतुर्थतंत्र्याश्चतुर्थसार्यां च आकर्षणात् एकश्रुत्यधिकीकरणेन निषादादिमश्रुतिग्राहिणौ अनुमन्द्रमन्द्रौ तीव्रधैवतावुत्पद्येते ॥ तद्वत्प्रथमतंत्र्याः तृतीयतंत्र्याश्च पञ्चमसार्यां आकर्षणेन श्रुतिद्वयस्य अधिकीकरणात् पञ्चमश्रुतिद्वयग्राहिणावनुमन्द्रमन्द्रौ तीव्रतममध्यमावुत्पद्येते इत्यर्थः॥ आकर्षणेन स्वरान्तरत्वकरणं भरतादीनामपि संमतं ॥ तथाच भरतः ॥ द्विधातानक्रिया तंत्र्यां प्रवेशान्निग्रहात्तथा ॥ तत्रप्रवेशनमधरस्वरविप्रकर्षादुत्तरस्वरमार्दवाद्वा ॥ निग्रहश्चासंस्पर्शइति ॥ अधिकिताइति तत्करोतीतिण्यन्तान्निष्ठा ॥ ३९ ॥

**केचन मध्यमतंत्री निषादसार्यां प्रवेशतो ब्रुवते ॥**
**कैशिकिकाकल्यावपि सार्यूनैका मते तेषाम् ॥ ४० ॥**
**अत्रानुमन्द्रषड्जा स्थाने त्वनुमन्द्रमध्यमोऽप्यस्ति ॥**
**मध्यममृदुपौ तत्र ग्राह्यौ नान्ये पतंत्र्यां ते ॥ ४१ ॥**

अमुमेव विप्रकर्षपक्षमंगीकृत्य मतान्तरमाह—**केचनेति** ॥ केचन केचित् मध्यमतन्त्री मंद्रमध्यसम्बन्धिनी चतुर्थतन्त्री तस्याः या निषादसारी पञ्चमी सारी तस्यां कैशिकिकाकल्यावपि प्रवेशतो ब्रुवते वदन्ति ॥ पूर्ववत् एकश्रुत्याकर्षणेन कैशिकी उदेति ॥ श्रुतिद्वयाकर्षणेन च काकली उदेति ॥ फलितमाह—**सारीति** ॥ तेषां मते एका सारी ऊना निषादसारी समीपस्था कैशिकिसारी न लगतीत्यर्थः ॥ तदा तु एकरागमेलाख्यशुद्धमेलायां मेरुणा सहैकविंशतिः सार्यः अतितारषड्जसारीपक्षे तु तेनैव सह द्वाविंशतिः सार्यो भवन्ति ॥ एवमखिलरागमेलायामपि कैशिकिसारीत्रये न्यूने मेरुणा सहैकोनत्रिंशत् ॥ अतितारपक्षे तु तेनैव सह त्रिंशत् ॥ ४० ॥ एवं ज्ञातस्वरस्थाप-

नात् प्रतिप्रसंगेन प्रसिद्धमतान्तरमाह—**अत्रानुमन्द्रेति** ॥ अत्र अस्मिन् कैशिकिसारीन्यूनत्वपक्षे अनुमन्द्रषड्जस्य यत् स्थानं प्रसङ्गस्तत्र तु अनुमन्द्रमध्ययोऽपि अस्ति प्रथमतंत्र्यां अनुमन्द्रमध्यमो मेरौ भवति ॥ प्रथमसार्यां तु मृदुपः द्वितीयायां शुद्धपः चतुर्थ्यां शुद्धधः पञ्चम्यां शुद्धनिः तत्रैव प्रवेशतः कैशिकिकाकल्यौ ॥ षष्ठ्यां मृदुसः सर्वेप्यनुमन्द्राः ॥ एतेषु प्रयोगार्हौ द्वावेवेत्याह—**मध्यमेति** ॥ तत्र तेषु मध्यममृदुपौ ग्राह्यौ ॥ नान्ये पञ्चमादयः ॥ तत्र हेतुमाह—ते पञ्चमादयः पतंत्र्यां अनुमन्द्रपञ्चमसम्बन्धिन्यां द्वितीयतंत्र्यां पुनः सन्तीति शेषः ॥ ४१ ॥

**ननु तनुवीणे तुल्ये गदिते शास्त्रेऽत्र नादसंवादात् ॥**
**मन्द्रादित्रयमर्हं तनुवत्तन्नानुमन्द्र इह ॥ ४२ ॥**
**नादोऽतिसूक्ष्मनामा नाभौ वदतेति शार्ङ्गदेवेन ॥**
**सूचित इहानुमन्द्रो वीणार्हेयं तदुक्तोऽत्र ॥ ४३ ॥**

एवमस्यां वीणायां अनुमन्द्रादयश्चतुर्विधाः स्वराः कथिताः ॥ तत्र कश्चित् पृच्छति—**ननु तनुवीण इति** ॥ ननु प्रश्ने ॥ अत्र शास्त्रे संगीते तनुवीणे देहवल्लक्यौ तुल्यौ समे कथिते ॥ कुतः ? नादस्य श्रुत्यादेर्यः संवादः एकत्वप्रकाशनं तस्मात् ॥ तथाच श्रुतिस्वरूपनिश्चये निःशङ्कः—व्यक्तये कुर्महे तासां वीणा द्वन्द्वे निदर्शनमिति ॥ तत्तस्मात् तनुवीणयोः साम्याद्धेतोः इह वीणायां तनुवत् देहवदनुमन्द्रादित्रयं अर्हं वक्तुं योग्यं न तु अनुमन्द्रस्याभावात् वीणायामनुमन्द्रकथनमयुक्तमिति प्रश्नार्थः ॥ ४२ ॥ तत्रोत्तरयति—**नाद इति** ॥ नाभौ अतिसूक्ष्मनामा अतिसूक्ष्मेतिसंज्ञः नादः आविर्भवतीति शेषः ॥ इतिवदता शार्ङ्गदेवेन इह देहे नाभौ वा अनुमन्द्रः सूचितः ॥ तत्सूचनामात्रं कृतं ॥ परं न देहे नाभिस्थस्य तस्य गाने अनुपयोगात् ॥ मन्द्रादिवत् अनुमन्द्रइत्यपि नामव्यवहाराय न कथितमित्यर्थः ॥ तथाच निःशङ्कः—नाभिहृत् कण्ठेत्यादिनादेऽतिसूक्ष्म इति ॥ तत्प्राचीनानुमतत्वाद्धेतोः वीणार्हः वीणोपयु-

क्तः अयं अनुमन्द्र अत्र ग्रंथे उक्तः नाभौ तुद्धाविंशतिनाड्यासम्भवात् श्रुतीनामनुदयः वीणायां तु अतिनीचानामपि श्रुतीनां सद्भावात् अनुमन्द्रो युक्तमेवात्रोक्त इतिभावः ॥ ४३ ॥

**अथ मध्यमेलवीणा लक्ष्यत इतरात्र चतसृषूर्ध्वासु ॥**
**मेढकतस्तन्त्रीषु ज्ञेया त्वाद्यानुमन्द्रपगा ॥ ४४ ॥**
**मन्द्रसयुताद्वितीया तृतीयिका मन्द्रपंचमं दधती ॥**
**तुर्या समध्यषड्जा तिस्रः श्रुतयस्तु पार्श्वस्थाः ॥ ४५ ॥**

एवं प्रथमं शुद्धमेलाख्यभेदं लक्षयित्वा द्वितीयं मध्यमेलाख्यभेदं लक्षयितुं प्रतिजानाति—अथेति ॥ अथ इतरा पश्चादुद्दिष्टमध्यमेलवीणा लक्ष्यते ॥ लक्षणमेवाह—अत्र चतसृष्वित्यादिना मात्राविंशत्या ऊनेन आर्यासप्तकेन ॥ अत्र एतस्यां चतसृषु मेढकतः मेरोः ऊर्ध्वासु तन्त्रीषु मध्ये इत्यर्थात् आद्या वा प्रथमा तु अनुमन्द्रो यः पः पञ्चमः तं गच्छति प्राप्नोतीति अनुमन्द्रपगा ज्ञेया ॥ ज्ञेया इति सर्वत्र अग्रेति ॥ ४४ ॥ द्वितीया मन्द्रसयुता । मन्द्रषड्जयुक्ता तृतीयिका तृतीया मन्द्रपञ्चमं दधती ॥ तुर्या चतुर्थी समध्यषड्जा मध्यषड्जेन सह वर्तमाना ॥ दधतीति शत्रन्तं ॥ श्रुतित्रयेस्वरानाह—तिस्रइति । तिस्रः पार्श्वस्थाः श्रुतयस्तु ॥ ४५ ॥

**मन्द्रसमन्द्रपमध्यसयुक्ताः क्रमतः स्वरास्थितिः सैव ॥**
**सारीषड्जे तेषु प्रामाण्यं पूर्ववत् किन्तु ॥ ४६ ॥**
**पञ्चमतन्त्रीजसरी तदप्रयोज्यौ पुनः सतन्त्र्योर्यत् ॥**
**तत्सङ्ख्याश्च न सार्यौतितारगाः परमते शिष्टाः ॥ ४७ ॥**

क्रमतः ऊर्ध्वमध्याधरक्रमेण मन्द्रसमन्द्रपमध्यसयुक्ताः ज्ञेयाः अत्र वचनविपरिणामः मन्द्रषड्जयुक्ता ऊर्ध्वश्रुतिः ॥ मन्द्रपञ्चमयुक्ता मध्यश्रुतिः म-

ध्यषड्जयुक्ता अधरश्रुतिरित्यर्थः । सारीषट्के सैव पूर्वैव स्वरास्थितिः स्वरस्थापना ॥ तेषु स्थापितस्वरेषु प्रामाण्यं पूर्ववत् ॥ ज्ञेयमिति शेषः ॥ तत्र मेरौ अनुमन्द्रपमन्द्रसमन्द्रपमध्यसाः पूर्ववत् संवादिनः ॥ प्रथमसार्यां अनुमन्द्रधमन्द्ररिमन्द्रधमध्यऋषभाः संवादिनः । द्वितीयसार्यां अनुमन्द्रनिमन्द्रगमन्द्रनिमध्यगान्धाराः संवादिनः । तृतीयसार्यां अनुमन्द्रकैशिकिमन्द्रसाधारणमन्द्रकैशिकिमध्य साधारणाः संवादिनः । चतुर्थ्यां अनुमन्द्रमृदुसमन्द्रमृदुममन्द्रमृदुसमध्यमृदुमाः संवादिनः । पञ्चम्यां मन्द्रसमन्द्रममध्यसमध्यमध्यमाः संवादिनः । षष्ठ्यां मन्द्ररिमन्द्रमृदुपमध्यरिमध्यमृदुपाः संवादिनः ॥ एवं संवादित्वेन पंक्तिसप्तकेपि प्रामाण्यं ॥ अनुमन्द्रपञ्चमादिप्रथमपंक्तेः पूर्ववत् स्वयम्भूत्वात् मन्द्रगान्धारमन्द्रपञ्चममध्यगांधारमध्यपञ्चमरूपाष्टमपङ्क्तेरपि स्वयम्भुत्वादन्तर्गतस्वरपङ्क्तीनामपि स्वयम्भूत्वेन च प्रामाण्यं ज्ञेयं ॥ एवं सप्रामाण्येष्वपि स्वरेषु त्याज्यावाह—**किन्त्विति** । किन्तु परन्तु पञ्चमयोः अनुमन्द्रमन्द्रपञ्चयोः ये तन्त्र्यौ तयोः जायेते तौ तज्जौ सरी मन्द्रौ मध्यौ च षड्जऋषभौ तत्ततोहेतोः अप्रयोज्यौ त्याज्यौ ॥ कुतः? यत् पुनः भूयः सयोर्मन्द्रमध्यषड्जयोर्ये तन्त्र्यौ तयोः ताविति वर्तते इति च शेषः ॥ त्यागे मुख्यहेतुस्तु पूर्वयोमन्द्रध्वानित्वं ॥ अस्यां शुद्धमेलापेक्षया न्यूनसारीकतां चाह—**तत्संख्याश्चेति** ॥ अत्रेति प्रकरणाद्गम्यते ॥ अत्र सार्यः सा संख्या यासामिति तत्संख्याः शुद्धमेलासारीसमसंख्याकाइति यावत् न सन्ति ॥ अस्मन्मते तारस्थानात्परं स्थानान्तराभावादिति भावः ॥ इयमपि शुद्धमेलावत् एकरागमेल अखिलरागमेलेति च द्विधा ॥ तत्र एकरागमेलाख्यमध्यमेलायां समेरवः सप्तदश सार्यः । एकरागमेलाख्यशुद्धमेलापेक्षया गान्धारादेव । इहत्यनिषादात्परस्य सारी चतुष्टयस्य कैशिक्यर्थाधिकसार्याश्च न्यूनत्वात् ॥ मतान्तरेण तु अतितारे षड्जेअष्टादशसार्यः ॥ अखिलरागमेलाख्यशुद्धमेलापेक्षया मृदुमादेव इहत्यमृदुषड्जात् परस्य सारीसप्तकस्य कैशिक्यार्थाधिकसार्याश्च न्यूनत्वात् ॥ मतान्तरेण तु अतितारे षड्जे पञ्चविंशतिः ॥ एवमवशिष्टाः पञ्च अष्ट च सारीः सार्थकयितुं परमतमाह—**अतितारगा इति** । शिष्टाः अस्मन्मतेऽवशिष्टासार्यः परमते केषांचिन्मते अतितारगाः अतिताराख्य-

षड्जादिस्वरगामिन्यः भवंतीति शेषः ॥ अन्यमते पञ्चमपर्यन्तं अतितारस्वरा अपि सन्तीति भावः ॥ ४७ ॥

इयमपि मयुतान्यमते पञ्चमतन्त्रीषु पूर्ववच्छेषम् ॥
त्याज्यौ मन्द्रसतन्त्र्याः शुद्धमभृदुपौ मतन्त्र्यां यत् ॥ ४८ ॥

मध्यमेळायामेव मतान्तरेण स्वरस्थापने विशेषमाह—इयमपीति ॥ इयं अन्यमते पञ्चमतन्त्रीषु मयुतापि अस्यामेव मेरुस्थयोः प्रथमतृतीयतन्त्र्योः अनुमन्द्रपञ्चमयोः स्थाने तादृशावेव मध्यमौ स्थाप्येते इत्यर्थः ॥ पञ्चमतन्त्रीष्विति बहुवचनेन श्रुतितन्त्रीस्थपञ्चमस्थानेपि मध्यमःस्थाप्यते ॥ शेषं पूर्ववत् । अवशिष्टं मध्यमेलालक्षणवत् ज्ञेयं ॥ तेन मेरौ अनुमन्द्रमध्यममन्द्रषड्जमन्द्रमध्यममध्यषड्जाः प्रथमसार्यान्तु अनुमन्द्रमृदुपमन्द्ररिमन्द्रमृदुपमध्यऋषभाः॥द्वितीयायां अनुमन्द्रपमन्द्रगमन्द्रपमध्यगान्धाराः ॥ तृतीयायां अनुमन्द्रधमन्द्रसाधारणमन्द्रधमध्यसाधारणाः ॥ चतुर्थ्यां अनुमन्द्रनिमन्द्रमृदुममन्द्रनिमध्यमृदुमाः ॥ पञ्चम्यां अनुमन्द्रकैशिकिमन्द्रममन्द्रकैशिकिमध्यमध्यमाः ॥ षष्ठ्यां अनुमन्द्रमृदुसमन्द्रमृदुपमन्द्रमृदुसमध्यमृदुपाः ॥ उर्ध्वतन्त्रीचतुष्टये ॥ श्रुतित्रयेतु उर्ध्वतन्त्र्यांमन्द्रसः ॥ मध्यतन्त्र्यांमन्द्रमः अधरतन्त्र्यां च मध्यसः स्वरपङ्क्तिप्रामाण्यमपि यथायोग्यं संवादित्वेन स्वयम्भूत्वेन चेति ज्ञेयं सारीन्यूनत्वादि च तद्वदेत्र ॥ अत्रापि त्याज्यस्वरावाह—त्याज्याविति ॥ मन्द्रसतंत्र्याः शुद्धममृदुपौ त्याज्यौ। द्वितीयायाः मन्द्रषड्जस्य तन्त्र्याः संबंधःपञ्चम्यां सार्यां मन्द्रमध्यमः षष्ठ्यां मन्द्रमृदुपश्च प्रयोगार्हो नेत्यर्थः ॥ कुतः? यत् यतो हेतोः मतन्त्र्यां मन्द्रमध्यमस्य तृतीयतन्त्र्यां शुद्धममृदुपौ मेरुप्रथमसार्योः वर्तेते इति च शेषः ॥ त्यागे मन्द्रध्वनित्वमेव हेतुः ॥ ४८ ॥

पूर्वास्तिस्रस्तन्त्री विनात्र तन्त्र्यांतु मध्यषड्जस्य ॥
त्रिस्थानस्मरसिध्यै स्थाप्यंते सारिकाः कैश्चित् ॥ ४९ ॥

अतितारपञ्चमादा वामे पार्श्वे श्रुतिस्तु मंद्रसयुक् ॥
दक्षिणपार्श्वे मध्यसतारसयुक्ते श्रुती वास्याम् ॥ ५० ॥

मतान्तरेण मध्यमेळाया एव चतुस्तन्त्रिकं भेदमाह द्वाभ्यां—**पूर्वास्तिस्र इति** ॥ अत्र मध्यमेळायां पूर्वास्तिस्रस्तंत्रीः प्रथमाः द्वितीया तृतीयाः विनासां बंधनमकृत्वैव मध्यषड्जस्य तन्त्र्यांतु मध्यषड्जवत्यां चतुर्थतंत्र्यामेव कैश्चित् सारिकाः स्थाप्यन्ते ॥ किमर्थं ? त्रिस्थानस्वराणां मध्यताराऽतितारोणां सिद्धिस्तस्यै ॥ ४९ ॥ अतितारस्वराणां मर्यादामभिविधिं चाह—**अतितारपञ्चमादिति** ॥ अतितारपञ्चमात् आ तं मर्यादीकृत्य अतितारपञ्चमं विना सार्यः स्थाप्यंत इत्यर्थः ॥ यद्वा तत्पञ्चमात् आ तं अभिव्याप्य सार्यः स्थाप्यन्ते ॥ तेन मर्यादपक्षे मेरुणासहाष्टादशसार्यो भवन्ति ॥ अभिविधिपक्षे तु मेरुणा सहैकोनविंशतिः ॥ पञ्चमादिति ॥ आङ्मर्यादाभिविध्योरिति कर्मप्रवचनीयत्वात्पञ्चम्यपङितिपञ्चमी ॥ श्रुतिषु स्वरानाह—**वामइति** ॥ अस्यां ऊर्ध्वैकतन्त्र्यां वीणायां वामपार्श्वे दण्डस्येत्यर्थं तत्र तु श्रुतिस्तु मन्द्रसयुक् मन्द्रषड्जवति चपरं दक्षिणपार्श्वे श्रुतिमध्यसतारसयुक्ते मध्यषड्जवत्यौ ॥ एवं चतुस्तन्त्रिकेयं ॥ इयमेव पार्श्वद्वये मन्द्रसमध्यसयुतश्रुतिकातन्त्रीत्यन्ये ॥ इयमेवाखिलरागमेला पूर्ववदित्यपरे । इयमेव पट्टिकाराहित्येन सप्तदशसर्वसारिकेति केचन ॥ ५० ॥

तन्त्र्यां मन्वत एकेऽतितारमपि कृत्रिमोक्तितः प्राचाम् ॥
किंत्वतितीव्रे नादे न स्वरता रञ्जनाभावात् ॥ ५१ ॥

ननु प्राचीनैरनुक्तमतितारं परेपि कथं मन्यन्ते इत्यत्राह—**तन्त्र्यां मन्वत इति** ॥ एके केचन तंत्र्यां वीणातंत्रिकायां अतितारमपि एतदाख्यं पञ्चम नादमपि मन्वते मन्यन्ते ॥ तत्र प्राचीनसूचनार्थं हेतुमाह—प्राचां कृत्रिमोक्तितः कृत्रिमइति उक्तिः कृत्रिमोक्तिः तस्याः हेतोः । तत्र निःशंकः—अ-

तिसूक्ष्मश्च सूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः ॥ इति पञ्चाभिधा धत्ते पञ्च-स्थानेष्वनुक्रमात् इति ॥ ततश्च मुखे केवलं स गानानुपयोगीवीणायां तु तादृ-क्श्रुतिसद्भावात् उपयुक्तइति तेनापि सूचितमितिभावः ॥ तर्हिअनुमन्द्रवत् भ-वतापि किं नाङ्गीक्रियत् इत्यत्राह—**किंत्विति** ॥ किंतु परंतु अतितीव्रे अ-तितीक्ष्णे नादे स्वरता स्वरत्वं न सङ्गच्छत इति शेषः ॥ तत्र हेतुमाह—**र-ञ्जनाभावादिति** ॥ अतितैक्ष्ण्येन रञ्जकः स न भवतीत्यर्थः ॥ तथाच निः-शङ्कः—स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते । एवं सति वीणाविशेषेण स्थापनविशेषेण वा यदा अतितीव्रेऽपि रञ्जनकारित्वं तदास्मन्मतेप्यति-तारो विद्यत एवेति भावः ॥ ९१ ॥

**अन्येऽपि सन्ति भेदा अतिप्रसिद्धा न ततो नोक्ताः ॥**
**सप्रामाण्यो भेदः परन्त्वनुक्तोऽप्युपादेयः ॥ ९२ ॥**

एवं प्रसिद्धभेदानुक्त्वा अन्यानपि भेदान् मन्यमान आह—**अन्येऽपीति** ॥ अन्येपि उक्तेभ्यः परेऽपि भेदाःसन्ति तत्किमिति नोक्ता इत्यत्राह—**ते भेदा अतिप्रसिद्धाः** ॥ न ततो हेतोर्नोक्ताः ॥ अतिप्रसिद्धलक्षणयैवात्रानुलक्षितत्वादि-तिभावः ॥ प्रमाणभेदमनुक्तमपि गृह्णीयादित्याह—**सप्रामाण्यइति** ॥ परन्तु तथा अनुक्तोऽपि भेदसप्रामाण्यः उपादेयः ग्राह्यः तद्यथा ॥ शुद्धमेळायाश्चतुर्थत-न्त्र्यां मन्द्रमध्यमस्थानमन्द्रपञ्चमोऽप्यस्ति श्रुतयः पूर्ववत् ॥ तत्र मेरुस्थाः अनुमन्द्रसअनुमन्द्रपमन्द्रसमन्द्रपञ्चमाः संवादिनः प्रथमसार्यान्तु अनुमन्द्रधैवत-मन्द्रऋषभमन्द्रधाः संवादिनः ॥ द्वितीयायां अनुमन्द्रगअनुमन्द्रनिमन्द्रगमन्द्र-निषादाः संवादिनः ॥ तृतीयायां अनुमन्द्रसाधारणअनुमन्द्रकैशिकिमन्द्रसाधारण-मन्द्रकैशिकिनः संवादिनः ॥ तुर्यायां अनुमन्द्रमृदुमअनुमन्द्रमृदुसमन्द्रमृदुममन्द्र-मृदुसा संवादिनः पञ्चम्यां अनुमन्द्रमअनुमन्द्रसमन्द्रममन्द्रसाः संवादिनः ॥ षष्ठ्यां अनुमन्द्रमृदुपअनुमन्द्रऋषभ मन्द्रमृदुपमन्द्रऋषभः संवादिनः प्रामाण्यंतु पं-क्तीनां संवादित्वेन मेरुपङ्क्त्युपपङ्क्त्योः स्वयंभुत्वेनापि इति दिक् ॥ ९२ ॥

**सकलकलेत्युनामकस्तोत्रकाविहिते हितेऽल्पबुद्धीनाम् ॥**
**वीणाभिदां द्वितीयो रागविबोधे विवेकोऽयम् ॥ २ ॥**

**सकलकलेति** ॥ वीणाभिदानां । रुद्रवीणाभिदानां संबन्धी अयं विवेकः राग-विबोधे द्वितीयः ॥ शिष्टं स्पष्टम् ॥

सकलकलेत्युपनामकमुद्गलसूरिसुतसोमनाथेन ॥
रागविबोधविवेको द्वितीयएवं मनाग्विवृतः ॥ २ ॥

**इति रागविबोधे द्वितीयो विवेकः सटीकः समाप्तः ॥**



श्रीसोमनाथविरचितः संगीतग्रन्थो

# रागविबोधः

स्वकृतटीकया समेतः ।

तत्र

## तृतीयो विवेकः ।

घारपुरे इत्युपनामकेन गणेशशास्त्रिसूनुना पुरुषोत्तमेन

जगद्धितेच्छुनाम्नि मुद्रालये मुद्रापयित्वा

प्राकाश्यं नीतः ।

शके १८१७

मूल्यम्—नव आनकाः ।

प्रापणव्ययस्तु आनकः ।

# रागविबोधे

## तृतीयविवेकः ।



दक्षिणे लक्ष्मणो यस्य वामे च जनकात्मजा ॥
पुरतो मारुतिर्यस्य वन्दे तं रघुनन्दनम् ॥ १ ॥
आर्यासूनुसमानं प्रणम्यमानं धरासुरैः प्रवरैः ॥
झाम्पाम्बया तयालं मुद्गलमालम्बदं कलये ॥ २ ॥

**अथ कथ्यन्ते मेलाः क्रमरूपास्ते भवन्ति खरसाङ्काः ॥**
**पञ्चदशभीरिगमधनिभेदैर्नियतश्रुतितया च ॥ १ ॥**
**" दैः शुचिसप्तकेनापि " इति वा पाठः ॥**

एवं नानाभेदवीणां निरूप्य तया प्रकाश्यान् मेलान् वक्तुं प्रतिजानाति-**अथ कथ्यन्त इति**॥मिलन्ति वर्गीभवन्ति रागा येष्विति तदाश्रयाः स्वरसंस्थानविशेषाः थाट इतिभाषायां ते कथ्यन्ते कीदृशाः?—क्रमरूपाः **क्रम** आनुपूर्व्या स्वरारोहणमेव रूपं येषां तेऽव्युत्क्रमस्थापितस्वरा इति यावत् । एवं तेषां सामान्यलक्षणमुक्त्वा तत्सङ्ख्यां प्रतिजानाति--**भवन्तीति** ।

ते मेलाः खरसाङ्काः षष्ट्यधिकानि नवशतानि भवन्ति सम्भवन्ति ॥ कैः कृत्वा ? पञ्चदशभिः रि.ग.म.ध. निभेदैः तीव्ररीप्रमुखैः ऋषभगान्धारमध्यमधैवतनिषादभेदैः । च पुनः नियताः चतुस्त्रिद्यादित्वेन निश्चिताः श्रुतयो येषां तेषां भावस्तत्ता तया । शुचिसप्तकेनापीति वा पाठः ॥ शुचि शुद्धं चतुस्त्रिद्यादित्वेन पूर्वं नियतश्रुतिकम् । यत्सप्तकं शुद्धसप्तस्वरा इति यावत् । तेन च अपिः समुच्चये तद्भेदपञ्चदशकेन शुद्धसप्तस्वरतया च सा सङ्ख्या सम्पद्यते । पञ्चदशभीरिगेति ढ्लोप इति दीर्घः ॥ १ ॥

> तीव्ररितीव्रतररितीव्रतमरिसाधारणान्तरा मृदुगः ॥
> तीव्रतमगतीव्रतममृदुपा धौ तीव्रतीव्रतरौ ॥ २ ॥
> तीव्रतमधकैशिकिनौ काकल्यथ मृदुस इत्यमी क्रमतः ॥
> तीव्ररिमुखं त्रिभिद्रेभेदाः साधारणप्रमुखाः ॥ ३ ॥
> गस्य मताश्चत्वारो द्वौ तीव्रतममुखौ मतौ मस्य ॥
> तीव्रधमुखा धस्य त्रयस्त्रयः कैशिकिमुखा नेः ॥ ४ ॥

प्रथमविवेकोक्तानपि पञ्चदशभेदानानुपूर्वीमात्रनिरूपणाय पुनरप्याह–तीव्ररिति सार्द्धया आर्यया । अमी भेदाः इति क्रमतः ज्ञेया इति शेषः ॥ तीव्ररीत्यादि अन्तरा इत्यन्तमेकं पदम्॥तीव्रतमगेत्यादि मृदुपा इत्यन्तं च॥ धौ तीव्रतीव्रतरौ तीव्रधः तीव्रतरधश्चेत्यर्थः ॥ अथ ततः शिष्टं स्पष्टम् ॥

इदानीमग्र उपयोगाय केषां के भेदा इत्यपि पुनरत्र स्पष्टयति–तीव्ररिमुखमिति सार्द्धया आर्यया॥रेः ऋषभस्य तीव्ररिः मुखं आदिर्यस्य तत् तिसृणां भिदां समाहारः त्रिभित् ॥ तीव्ररितीव्रतररितीव्रतमरयः ऋषभस्य भेदा इत्यर्थः ॥ साधारणमुखाश्चत्वारो भेदा गस्य मताः साधारणान्तरमृदुगतीव्रतमगा गान्धारस्य भेदा इत्यर्थः ॥ तीव्रतममुखौ द्वौ भेदाविति शेषः ॥ मस्य मतौ तीव्रतममृदुमौ मध्यमस्य भेदावित्यर्थः॥ तीव्रधमुखास्त्रयः धस्य भेदा मता इति शेषः। तीव्रधतीव्रतरधतीव्रतमधा धैवतस्य भेदा इत्यर्थः ॥ कैशिकिमुखास्त्रयः नेर्भेदा मता इत्येव॥कैशिकिकाकलिमृदुसाः निषादस्य भेदा इत्यर्थः ॥२॥३॥४॥

**उक्ता मृदुमो गभिदा मृदुपो मभिदा च नेर्भिदा मृदुसः ॥**
**पूर्वान्पञ्चदशभ्यः स्वरान्ब्रुवे भेदभेदकरान् ॥ ५ ॥**
**तीव्ररिमुखत्रयात्सः साधारणमुखचतुष्टयादृषभः ॥**
**स्याद्गस्तीव्रतममुखे युगुलात्तीव्रधमुखत्रयतः ॥ ६ ॥**
**पूर्वे पञ्चम उक्तः कैशिक्यादेस्त्रिकाच्चधः शुचिवत् ॥**
**एवं यथा तथैते भिन्द्यः पूर्वे स्वरा नियताः ॥ ७ ॥**

मृदुममृदुपमृदुसानां मध्यमपञ्चमषड्जभेदत्वप्रतीतिं निराकरोति—**उक्तेति**॥ मृदुपः गभिदा गान्धारस्यैव भेदः ॥ तथा मृदुपः मभिदा मध्यमस्यैव भेदः ॥ मृदुसश्च नेर्भिदा निषादस्यैव भेदः उक्तः कथितैव । प्रथमविवेके निगमामृदु-परसमपाइ त्यार्यया॥ अत्र मृदुमादिसंज्ञाकरणं तु च्युतमध्यमादिप्राचीनसंज्ञानु-सारेण ॥ इदानीं तीव्रतररितीव्रतमधयोः शुद्धगसाधारणाभ्यां तीव्रतमगस्य शुद्धमध्यमेन तीव्रतरधतीव्रतमधयोः शुद्धनिकैशिकिभ्यां च सह ऐक्याद्भे-दपञ्चदशकत्वहानौ प्राप्तायां तत्सङ्ख्यास्थापनाय भेदपञ्चदशकान् पूर्वान् नियतस्वरान् वक्तुं प्रतिजानाति—**पूर्वान्पञ्चदशभ्यः स्वरान् ब्रुवे भेदकरा-निति** ॥ भेदानां यो भेदः तत्करान् शिष्टं स्पष्टं तदेवाह—**तीव्ररिमुख-त्रयादिति** सार्द्धया आर्यया ॥ तीव्ररिमुखात्त्रयात् पूर्वं सः तीव्ररितीव्रतररिती-व्रतमरिभ्यः पूर्वं प्रत्येकं षड्ज एव भवतीत्यर्थः ॥ किंवत् ? शुचिवत् । शुचि-ना शुद्धेन तुल्यं यथा शुद्धऋषभात्पूर्वं सः तथैभ्योऽपीत्यर्थः ॥ शुचिवदि-त्यन्त उक्तमपि सर्ववाक्यशेषत्वात् सर्वत्र सम्बध्यते ॥ साधारणमुखचतुष्टया-त्पूर्वं ऋषभः ॥ साधारणान्तरमृदुमतीव्रतमगेभ्यः पूर्वं ऋषभ एव भवेत् ॥ तीव्रतममृदुपाभ्यां पूर्वं गान्धारएव भवति तीव्रधमुखत्रयतः तीव्रधती-व्रतरधतीव्रतमधेभ्यः मुखयुगुलात्पूर्वं पञ्चम उक्तः कथितः ॥ कैशिक्यादेस्त्रि-कात् कैशिकिकाकलिमृदुसेभ्यः पूर्वं धः धैवतः॥पूर्वमिति मध्य उक्तमपि च सर्वत्र सम्बध्यते ॥ निगमयति—**एवमिति** ॥ एवमेते षड्जादयः यथा तथा स्वस्वश्रु-तिस्थाः परश्रुतिस्था वा अन्यभेदान्तर्गता वा भिद्भ्यः भेदेभ्यः पूर्वं नियताः नि-

श्रितं भवंति॥ ततश्च केषांचिदेकश्रुतिस्थतया ध्वनिसाम्येऽपि तत्तत्पूर्वं स्वरकृतो मेलेषु भेद इति भावः ॥ ५ ॥ ६ ॥ ७ ॥

**एकद्वित्रिचतुः पञ्चभिदास्तिथ१५योंककरि८९च भूरसदृक्२६१॥**
**गजगिरिगुणाश्च३७८ नृपदृक्२१६क्रमतो मेला अभिच्चेन्दुः ॥८॥**

अथ पूर्वोक्तां मेलसङ्ख्यां साधयति–**एकद्वित्रीत्यार्यया** ॥ एकद्वित्रिचतुष्पञ्चभिदाः एका द्वे तिस्रः चतस्रः पञ्च भिदाः भेदा येषु ते मेलाः क्रमतः तिथय इत्यादिकाः स्युरिति शेषः ॥ तत्रैकैकभेदा मेलाः तिथयः पञ्चदश द्विद्विभेदाः अङ्ककरि च एकोना नवतिः॥ त्रित्रिभेदाः भूरसदृक् एकषष्ट्याधिकं शतद्वयं चतुश्चतुर्भेदाः गजगिरिगुणाश्च अष्टसप्तत्यधिकं शतत्रयं पञ्च पञ्चभेदाः मेलाः नृपदृक् षोडशाधिकं शतद्वयम् ॥ अभित् भेदरहितः ॥ शुद्धसप्तस्वर इति यावत् ॥ सः इन्दुः एकश्च ॥ एवं मिलिताः खरसाङ्काः मेला इत्यर्थः ॥ षड्जपञ्चमयोरविकृतत्वात् षड्भेदसप्तभेदमेलासम्भवः ॥ अत्र त्रयश्च शब्दाः द्वयोर्द्वयोः समुच्चये ॥ अङ्ककरि भूरसदृक् नृपदृक् इति च समाहारद्वन्द्वः ॥ ८ ॥

**पञ्चदशैते भेदा एकाद्यङ्काभिधा ब्रुवेऽशाङ्कान् ॥**
**सङ्ख्याहेतूनेकाद्यब्याद्यप्रमुखमेलदिशः ॥ ९ ॥**

उक्तप्रत्ययार्थं सङ्ख्याज्ञानोपायादीन् वक्तुकामः पञ्चदशानां भेदानां लाघवाय संज्ञान्तराण्याह–**पञ्चदशेति** ॥ पञ्चदश एते तीव्ररिप्रमुखा भेदा एकाद्यङ्काभिधाः एकादयोंङ्कास्तेऽभिधा नाम एषां तादृशाः ज्ञेया इति शेषः॥ तत्र तीव्ररेः संज्ञा एकाङ्कः। तीव्रतररेर्द्व्यंक इत्यादि पञ्चदशाङ्कपर्यन्तं संज्ञाः ॥अथ पञ्चदशैकोननवत्यादिसङ्ख्यानां साधकान् तीव्रन्याद्यतीव्रतरन्याद्यादिमेलानां बोधकान् तत्तत्सङ्ख्यावयवभूतान् अङ्कान् वक्तुं प्रतिजानाति–**ब्रुवेऽशाङ्कानिति** । स्पष्टम् ॥ सङ्ख्याहेतून् यैर्मिलितैः पञ्चदशादय एकभेदादिर्मेलसङ्ख्याः साध्यन्ते ॥ तथा एकाद्यब्याद्यप्रमुखमेलादश एकस्तीव्ररिराद्यो भेदेषु प्रथमो येषां

मेलानां ते एकाद्या द्वौ नाम तीव्रतरारिः आद्यो भेदेषु प्रथमो येषां मेलानां ते द्याद्यास्ते प्रमुखा येषां तीव्रतमन्याद्यसाधारणाद्यादिमेलानां तान् दिशन्ति बोधयन्तीति तद्दिशः ॥ यैरंशाङ्कैस्तीव्रन्याद्यतीव्रतरन्याद्यादयो मेला एतावन्त इति ज्ञायन्त इत्यर्थः ॥ ९ ॥

**॥ एकभिदां पञ्चार्हा एकाङ्काः पञ्चदश ततो द्विभिदाम् ॥**
**॥ रवय१२त्रिधा चतुर्धा इभा८ द्विधा षट्६ त्रिधा रामाः३ ॥ १० ॥**

तानेवांशाङ्कानाह—**एकभिदामिति** ॥ एकैकभेदवतां मेलानां पञ्चदश एकाङ्का अंशाङ्काः ॥ मेलानां अंशाङ्का इति च शेषः सर्वत्र॥ कीदृशाः? पञ्चार्हाः त्रिचतुर्द्वित्रित्रिभेदवतां रिगमधनीनां अर्हाः योग्यास्तेन प्रथमरेस्त्रिष्वेकाङ्कऽवच्छेदः। ततो गस्य चतुर्षु ततो मस्य द्वयोः ततो धस्य त्रिषु ततो नेस्त्रिषु। एवमुत्तरत्रापि ॥ ततश्च पञ्चदशभिरेकाङ्कैः पञ्चदशसङ्ख्या साध्यते ॥ ततः द्विभिदां द्विद्विभेदवतां मेलानां अंशाङ्कास्त्रिधा रवयः त्रिस्थानस्था द्वादश ॥ चतुर्धा इभाः चतुःस्थानस्था अष्टौ द्विधा स्थानद्वयस्थाः षट्। त्रिधा रामाः स्थानत्रयस्थास्त्रयः ततश्च एवं द्वादशभिरंशाङ्कैरेकोननवतिसङ्ख्या साध्यते ॥ १० ॥

**त्रिभिदां त्रिधाग्निबाणाः५३कुदृक्२१चतुर्धा नव९द्विधा गदिताः ॥**
**त्रेधा चतुर्भिदां दृक् दिश१०श्चतुर्धा गजक्षितयः१८ ॥ ११ ॥**
**पञ्चभिदां दृग्गिरय७२स्त्रिधेति यदि पूर्वसङ्ख्योना ॥**
**सस्थानैः स्वैरङ्कैस्तज्जनयेत्परपरांशाङ्कान् ॥ १२ ॥**

त्रिभिदां त्रित्रिभेदवतां मेलानां अंशाङ्काः त्रिधा अग्निबाणाः स्थानत्रयस्थाः त्रिपञ्चाशत् ॥ चतुर्धा कुदृक् स्थानचतुष्टयस्था एकविंशतिः ॥ द्विधा स्थानद्वयस्था नव ॥ गदिता उक्ताः। गदिता इति सर्वत्र क्रियापदं ततश्च इति नवभिरंशाङ्कैरेकषष्ट्यधिकशतद्वयसङ्ख्या साध्यते ॥ कुदृगिति समाहारद्वन्द्वः ॥ चतुर्भिदां चतुश्चतुर्भेदवतां मेलानां अंशाङ्कास्त्रेधा दृक्दिशः स्थानत्रयस्य द्व्यधिकशतं ॥ चतुर्धा गजक्षितयः स्थानचतुष्टयस्था अष्टादश ॥

ततश्चैभिः सप्तभिरंशाङ्करष्टसप्तत्यधिकशतत्रयसङ्ख्या साध्यते ॥ पञ्चभिर्दा पञ्च पञ्चभेदवतां मेलानामंशाङ्कास्त्रिधा दृग्गिरयः स्थानत्रयस्था द्विसप्ततिः॥ ततश्चैभिस्त्रिभिरंशाङ्कैः षोडशाधिकशतद्वयसङ्ख्या साध्यते ॥ इति शब्दः प्रकारे एवं प्रकारास्ते इत्यर्थः ॥ एवं पञ्चविधानां मेलानामंशकेषु उत्तरोत्तरमधोधः निषादभेदाः निषादधैवतभेदाः निषादधैवतमध्यमभेदा निषादधैवतमध्यमगान्धारभेदाश्च हीयन्ते ॥ तेऽङ्को यथा । इदानीं विश्वासाय अंशाङ्कानामुत्पत्तिमाह—**यदि पूर्वसङ्ख्येति** ॥ यदि पूर्वसङ्ख्या प्रथमप्रथमसङ्ख्या संस्थानैस्त्रिचतुरादिस्थानसङ्ख्यासहितैस्वैरङ्कैरंशाङ्केरूना हीयते तर्हि परपरांशाङ्कान् जनयेत् ॥ तद्यथा ॥ भेदपञ्चदशमूलैः पञ्चदशभिरेकाङ्कैः साधितायां पञ्चदशसङ्ख्यायामूर्ध्वतः त्रिषु एकाङ्केषु न्यूनेषु जाता द्वादश । तेषु न्यूनेषु जाता अष्टौ । तेष्वपि द्वयोरूनयोर्जाता षट् ॥ तेषु त्रिषु तेषु न्यूनेषु तेष्वपि चतुर्षु जातास्त्रयः तेष्वपि त्रिषु तेषु न्यूनेषु जातं शून्यम्॥ एव ते क्रमेण यथार्हं त्रिस्थानस्थाः सन्तः द्विभेदसङ्ख्याया अंशाङ्काः सम्पद्यन्ते ॥ तस्यां च एकोननवतिसंख्यायां ऊर्ध्वतस्त्रिषु द्वादशन्यूनेषु जातास्त्रिपञ्चाशत् ॥ तस्यामपि चतुर्षु अष्टाङ्केषु जाता एकविंशतिः।तस्यां च द्वयोः षडङ्कयोरूनयोर्जाता नव । तेष्वपि त्रिषु त्र्यङ्केषु न्यूनेषु स्थितं शून्यम् ॥ एवं तेऽपि क्रमेण यथार्हं त्रिचतुर्द्विस्थानस्थाः सन्तः त्रिभेदसङ्ख्याया अंशाङ्काः सम्पद्यन्ते ॥ तस्यां च एकषष्ट्यधिकशतद्वयसङ्ख्यायां पूर्ववत् त्रिषु त्रिपञ्चाशदङ्केषूनेषु जातं द्व्यधिकशतम् ॥ तस्मिंश्च चतुर्षु एकविंशत्यङ्केषूनेषु जाता अष्टादश ॥ तेष्वपि द्वयोर्नवाङ्कयोरूनयोः स्थितं शून्यम्॥ एवं तेऽपि क्रमेण यथार्हं त्रिचतुःस्थाः सन्तः चतुर्भेदसङ्ख्याया अंशाङ्काः सम्पद्यन्ते ॥ तस्यां चाष्टसप्तत्यधिकशतत्रयसङ्ख्यायां त्रिषु द्व्यधिकशताङ्केषूनेषु जाता द्विसप्ततिः ॥ तस्यां च चतुर्ष्वष्टदशाङ्केषु न्यूनेषु स्थितं शून्यम्॥एवमेकभेदादिमेलांशाङ्कोत्पत्तिः॥ तत्र पञ्चदशमितेषु एकभेदेषु तीव्रन्यास्तीव्रतरन्याद्यस्तत्प्रमुखाद्याश्च एकैके एव मेलाः॥ एकोननवतिमितेषु द्विभेदेषु तीव्रन्याद्या मेला द्वादश।तीव्रतरन्याद्या द्वादश।तीव्रतमन्याद्याश्च द्वादश॥साधारणाद्या अष्टौ॥अन्तराद्या अष्टौ॥मृदुमाद्या अष्टौ तीव्रतम-

गाद्याश्चाष्टौ॥ तीव्रतममाद्याः षट् तीव्रधाद्यास्त्रयः तीव्रतरधाद्यास्त्रयः॥ तीव्रतमधाद्यास्त्रयः॥ कैशिक्याद्या न सम्भवन्ति॥ निषादात्परस्य भेदवतो द्वितीयस्याभावात्॥ एकषष्ट्यधिकशतद्वयमितेषु त्रिभेदेषु तु तीव्रन्याद्या मेलास्त्रिपञ्चाशत्॥ तीव्रतरन्याद्यास्त्रिपञ्चाशत्॥ तीव्रतमन्याद्यास्त्रिपञ्चाशत्॥ साधारणाद्या एकविंशतिः॥ अन्तराद्या एकविंशतिः ॥ मृदुमाद्या एकविंशतिः। तीव्रतमगाद्याश्चैकविंशतिः ॥ तीव्रतममाद्या नव ॥ मृदुपाद्याश्च नव ॥ तीव्रधाद्यप्रमुखानां त्वसम्भवः॥धैवतनिषादाभ्यां परस्य भेदवतस्तृतीयस्याभावात्॥ अष्टसप्तत्यधिकशतत्रयमितेषु चतुर्भेदेषु तु तीव्रन्याद्या मेलाद्व्यधिकशतम्॥ तीव्रतमन्याद्याश्च द्व्यधिकं शतम्॥ साधारणाद्या अष्टादश ॥ अन्तराद्या अष्टादश ॥ मृदुमाद्या अष्टादश ॥ तीव्रतमगाद्याश्चाष्टादश ॥ तीव्रतममाद्यादीनां त्वसम्भवः ॥ मध्यमधैवतनिषादेभ्यः परस्य भेदवतश्चतुर्थस्याभावात् ॥ षोडशाधिकशतद्वयमितेषु तु पञ्चभेदेषु तीव्रन्याद्या द्विसप्ततिः॥ तीव्रतरन्याद्या द्विसप्ततिः ॥ तीव्रतमन्याद्याश्च द्विसप्ततिः॥ साधारणाद्यादीनां त्वसम्भवः ॥ गान्धारमध्यमधैवतनिषादेभ्यः परस्य भेदवतः पञ्चमस्वरस्याभावात् ॥ ११ ॥ १२ ॥

| एकभेदांशांकाः | द्विभेदांशांकाः | त्रिभेदांशांकाः | चतुर्भेदांशांकाः | पञ्चभेदांशांकाः |
|---|---|---|---|---|
| १<br>१<br>१ | १२<br>१२<br>१२ | ५३<br>५३<br>५३ | १०२<br>१०२<br>१०२ | ७२<br>७२<br>७२ |
| १<br>१<br>१<br>१ | ८<br>८<br>८<br>८ | २१<br>२१<br>२१<br>२१ | १८<br>१८<br>१८<br>१८ | ०<br>०<br>०<br>० |
| १<br>१ | ६<br>६ | ९<br>९ | ०<br>० | ०<br>० |
| १<br>१<br>१ | ३<br>३<br>३ | ०<br>०<br>० | ०<br>०<br>० | ०<br>०<br>० |
| १<br>१<br>१ | ०<br>०<br>० | ०<br>०<br>० | ०<br>०<br>० | ०<br>०<br>० |
| १५ | ८९ | २६१ | ३७८ | २१६ |

एकश्चत्वारोऽष्टौ दश त्रयोदश च मूलपङ्क्तिः सा ॥
न्यस्या प्रस्तारार्थं सैवैकैकाधिकान्ते च ॥ १३ ॥
तिर्यङ्काद्याधोऽध उपान्त्ये सैकिताखिलाधःस्था ॥
अग्रे मूलाङ्कवती पङ्क्तिरधः प्रागिवाधोऽधः ॥ १४ ॥

अथ प्रत्ययदार्ढ्याय प्रस्तारादि कथयिष्यन् तन्मूलभूतां पञ्चविधां भेदक्रमपङ्क्तिमाह—**एक इति**॥ एकश्चत्वारः अष्टौ द्वादश त्रयोदश च मूलपङ्क्तिः रिगमधनीनां प्रथमप्रथमभेदक्रममय्येव मूलभूता पङ्क्तिः तेषां तीव्रतरत्र्यादिद्वितीया दिभेदानां तु युगपत्सहावस्थानासम्भवादित्यर्थः॥तत्रैकभेदानां एकश्चत्वारोऽष्टौ दश त्रयोदशेति पञ्चभेदानां एकश्चत्वारोऽष्टौ दश त्रयोदशेति च यथायथं मूलपङ्क्तयो बोद्धव्याः॥ प्रस्तारमाह एकाक्षराधिकार्द्धसहितचतसृभिरार्याभिः—**सा न्यस्येति** ॥ सा मूलपङ्क्तिः प्रस्तारार्थं न्यस्या आदावूर्ध्वं लेख्या ॥ च पुनः सैव लिखितपङ्क्तिरेव अन्ते अन्त्याङ्के एकैकाधिकाऽधोधः लिखितव्या ॥ न्यस्येति सर्वत्र ॥ अभिविधिमाह—**तिथ्यङ्कादाचेति** ॥ यावत्पञ्चदशाङ्को भवेत्तावदिति लेख्यमित्यर्थः ॥ अखिलाधस्था अन्त्यपञ्चदशाङ्का पङ्क्तिः उपान्त्ये सैकिता अन्त्यात्पूर्वे अङ्के सैका कृता तथाग्रे पञ्चदशाङ्कस्थाने मूलाङ्कवती तत्स्थानोचितमूलपङ्क्त्यङ्कयुता सत्यधो न्यस्या ॥ अधोऽधः प्रागिव न्यस्या पूर्ववत् ॥ लिखितपङ्क्तिरेवान्ते सैका सती पञ्चदशाङ्कपर्यन्तं लेख्येत्यर्थः ॥ १४ ॥

**सैकोपान्त इति प्राग्वदुपान्से द्वादशाङ्केधःस्था ॥**
**अन्त्यात्तृतीय एकाढ्याग्रे मूलाङ्कवत्येव ॥ १५ ॥**

उपान्ते सैका इति इत्यादिकाक्रिया प्राग्वत् पञ्चदशाङ्कपंक्तिः उपान्त्ये पुनः सैका अग्रे मूलाङ्कवती अधः सैवान्ते सैकसैका पञ्चदशाङ्कपर्यन्तामिति पूर्ववदित्यर्थः ॥ द्वादशाङ्के उपान्त्ये सति अधःस्था पञ्चदशाङ्कपङ्क्तिः अन्त्यात्तृतीये उपान्त्यात्पूर्वाङ्के एकस्था सैका तथा अग्रे द्वादशाङ्कपञ्चदशाङ्कयोर्मूलाङ्कवत्येव तत्स्थानोचितमूलपङ्क्त्यंकद्वययुक्तैर्वाऽधोलेख्येत्यर्थः ॥ १५ ॥

**पूर्ववदखिलं भूयोऽधःस्थान्त्यतृतीयगे नवाङ्के तु ॥**
**सैकान्त्यतुरीयेऽग्रे मूलाङ्कवती पुनः प्राग्वत् ॥ १६ ॥**

भूयः पुनरपि । अखिलं पूर्ववत् ॥ आपञ्चदशभ्योन्तेऽन्ते सैककरणम् ॥ अग्रे मूलाङ्ककरणं इत्यादि च वारंवारं पूर्ववत् कार्यमित्यर्थः॥ अधःस्था पञ्चदशाङ्कपङ्क्तिः नवाङ्के तु अन्त्यतृतीयगे अन्त्यात्तृतीयस्थाने सति अन्त्यतुरीये अ-

न्त्याच्चतुर्थाङ्के सैका अग्रे नवद्वादशपञ्चदशाङ्केषु मूलाङ्कवती तत्स्थानत्रयोचितमूलपङ्क्त्यङ्कत्रययुक्ता च सती अधो लेख्येत्यर्थः ॥ पुनः प्राग्वत् ॥ आपञ्चदशस्यान्तेऽङ्के सैककरणं उपान्त्ये च सैककरणाद्यन्ततृतीये च सैककरणादिपूर्ववदेव कार्यमित्यर्थः ॥ १६ ॥

**सप्ताङ्केऽन्त्यात्तुर्येऽधःपङ्क्तिस्त्वन्त्यपञ्चमे सैका ॥**
**शेषं पूर्ववदेवं प्रस्तारो ह्यादिभेदानाम् ॥ १७ ॥**

अधः पङ्क्तिः पञ्चदशाङ्कपाङ्क्तिस्तु सप्ताङ्केऽन्त्यात्तुर्ये चतुर्थे सति अन्त्यपञ्चमे अन्त्यात्पञ्चमाङ्के सैका। शेषं पूर्ववत् ॥ अधस्तनद्वादशपञ्चदशाङ्केषु मूलपङ्क्तिवत् चतुरष्टदशत्रयोदशाङ्ककरणं अन्तेऽन्ते सैककरणादि अन्त्यतृतीये सैककरणादि ॥ अन्तचतुर्थे च सैककरणादि च कर्म यावत् ॥अन्त्यात्पञ्चमरुयङ्को भवति तावत्कार्यमित्यर्थः ॥ प्रस्तारं निगमयति—**प्रस्तार इति** ॥ ह्यादिभेदानां एवं प्रस्तारः ॥ एकभेदप्रस्तारो निगमनविशेषाभावान्नोक्तः ॥ तत्र द्विभेदप्रस्तारे मूलपाङ्क्तिः एकः १ चत्वारः ४ ॥ अन्त्यपङ्क्तिः द्वादश १२ पञ्चदश १५ ॥ त्रिप्रस्तारे मूलपङ्क्तिः १।४।८ ॥ अन्त्यपङ्क्तिः ९।१२।१५ ॥ चतुःप्रस्तारे मूलपङ्क्तिः १।४।८।१० ॥ अन्त्यपङ्क्तिः ७।९।१२।१५ ॥ पञ्चप्रस्तारे मूलपङ्क्तिः १।४।८।१०।१३ ॥ अन्त्यपङ्क्तिः ३।७।९।१२।१५ ॥ तत्तद्भेदप्रस्तारोदाहरणानि यथा ॥

| ऋषभभेदा एते | गान्धारभेदाः | मध्यमभेदौ | धैवतभेदाः | निषादभेदाः |
|---|---|---|---|---|
| १ तीव्ररिः | ४ साधारणः | ८ तीव्रमः | १० तीव्रधः | १३ कैशिकी |
| २ तीव्रतररिः | ५ अन्तरः | ९ मृदुपः | ११ तीव्रतरधः | १४ काकली |
| ३ तीव्रतमरिः | ६ मृदुमः | | १२ तीव्रतमधः | १५ मृदुसः |
| | ७ तीव्रतमगः | | | |

एकभेदप्रस्तारः

१
२
३
४
५
६
७
८
९
१०
११
१२
१३
१४
१५

॥१५॥

द्विभेदप्रस्तारः

१ ॥ ४
१ ॥ ५
१ ॥ ६
१ ॥ ७
१ ॥ ८
१ ॥ ९
१ ॥ १०
१ ॥ ११
१ ॥ १२
१ ॥ १३
१ ॥ १४
१ ॥ १५

२ ॥ ४
२ ॥ ५
२ ॥ ६
२ ॥ ७
२ ॥ ८
२ ॥ ९
२ ॥ १०
२ ॥ ११
२ ॥ १२
२ ॥ १३
२ ॥ १४
२ ॥ १५

३ ॥ ४
३ ॥ ५
३ ॥ ६
३ ॥ ७
३ ॥ ८
३ ॥ ९
३ ॥ १०
३ ॥ ११
३ ॥ १२
३ ॥ १३
३ ॥ १४
३ ॥ १५

४ ॥ ८
४ ॥ ९
४ ॥ १०
४ ॥ ११
४ ॥ १२
४ ॥ १३
४ ॥ १४
४ ॥ १५

५ ॥ ८
५ ॥ ९
५ ॥ १०
५ ॥ ११
५ ॥ १२
५ ॥ १३
५ ॥ १४
५ ॥ १५

६ ॥ ८
६ ॥ ९
६ ॥ १०
६ ॥ ११
६ ॥ १२
६ ॥ १३
६ ॥ १४
६ ॥ १५

७ ॥ ८
७ ॥ ९
७ ॥ १०
७ ॥ ११
७ ॥ १२
७ ॥ १३
७ ॥ १४
७ ॥ १५

८ ॥ १०
८ ॥ ११
८ ॥ १२
८ ॥ १३
८ ॥ १४
८ ॥ १५

९ ॥ १०
९ ॥ ११
९ ॥ १२
९ ॥ १३
९ ॥ १४
९ ॥ १५

१० ॥ १३
१० ॥ १४
१० ॥ १५

११ ॥ १३
११ ॥ १४
११ ॥ १५

१२ ॥ १३
१२ ॥ १४
१२ ॥ १५

॥८९॥

इति द्विभेदप्रस्तारः

अथ त्रिभेदप्रस्तारः

१ ॥ ४ ॥ ८
१ ॥ ४ ॥ ९
१ ॥ ४ ॥ १०
१ ॥ ४ ॥ ११
१ ॥ ४ ॥ १२
१ ॥ ४ ॥ १३
१ ॥ ४ ॥ १४
१ ॥ ४ ॥ १५

१ ॥ ५ ॥ ८
१ ॥ ५ ॥ ९
१ ॥ ५ ॥ १०
१ ॥ ५ ॥ ११
१ ॥ ५ ॥ १२
१ ॥ ५ ॥ १३
१ ॥ ५ ॥ १५
१ ॥ ५ ॥ १६

१ ॥ ६ ॥ ८
१ ॥ ६ ॥ ९
१ ॥ ६ ॥ १०
१ ॥ ६ ॥ ११
१ ॥ ६ ॥ १२
१ ॥ ६ ॥ १३
१ ॥ ६ ॥ १४
१ ॥ ६ ॥ १५

१ ॥ ७ ॥ ८
१ ॥ ७ ॥ ९
१ ॥ ७ ॥ १०
१ ॥ ७ ॥ ११
१ ॥ ७ ॥ १२
१ ॥ ७ ॥ १३
१ ॥ ७ ॥ १४
१ ॥ ७ ॥ १५

१ ॥ ८ ॥ १०
१ ॥ ८ ॥ ११
१ ॥ ८ ॥ १२
१ ॥ ८ ॥ १३
१ ॥ ८ ॥ १४
१ ॥ ८ ॥ १५

१ ॥ ९ ॥ १०
१ ॥ ९ ॥ ११
१ ॥ ९ ॥ १२
१ ॥ ९ ॥ १३
१ ॥ ९ ॥ १४
१ ॥ ९ ॥ १५

१ ॥ १० ॥ १३
१ ॥ १० ॥ १४
१ ॥ १० ॥ १५

१ ॥ ११ ॥ १३
१ ॥ ११ ॥ १४
१ ॥ ११ ॥ १५

१ ॥ १२ ॥ १३
१ ॥ १२ ॥ १४
१ ॥ १२ ॥ १५

५३

२ ॥ ४ ॥ ८
२ ॥ ४ ॥ ९
२ ॥ ४ ॥ १०
२ ॥ ४ ॥ ११
२ ॥ ४ ॥ १२
२ ॥ ४ ॥ १३
२ ॥ ४ ॥ १४
२ ॥ ४ ॥ १५

२ ॥ ५ ॥ ८
२ ॥ ५ ॥ ९
२ ॥ ५ ॥ १०
२ ॥ ५ ॥ ११
२ ॥ ५ ॥ १२
२ ॥ ५ ॥ १३
२ ॥ ५ ॥ १४
२ ॥ ५ ॥ १५

२ ॥ ६ ॥ ८
२ ॥ ६ ॥ ९
२ ॥ ६ ॥ १०
२ ॥ ६ ॥ ११
२ ॥ ६ ॥ १२
२ ॥ ६ ॥ १३
२ ॥ ६ ॥ १४
२ ॥ ६ ॥ १५

२ ॥ ७ ॥ ८
२ ॥ ७ ॥ ९
२ ॥ ७ ॥ १०
२ ॥ ७ ॥ ११
२ ॥ ७ ॥ १२
२ ॥ ७ ॥ १३
२ ॥ ७ ॥ १४
२ ॥ ७ ॥ १५

२ ॥ ८ ॥ १०
२ ॥ ८ ॥ ११
२ ॥ ८ ॥ १२
२ ॥ ८ ॥ १३
२ ॥ ८ ॥ १४
२ ॥ ८ ॥ १५

२ ॥ ९ ॥ १०
२ ॥ ९ ॥ ११
२ ॥ ९ ॥ १२
२ ॥ ९ ॥ १३
२ ॥ ९ ॥ १४
२ ॥ ९ ॥ १५

२ ॥ १० ॥ १३
२ ॥ १० ॥ १४
२ ॥ १० ॥ १५

२ ॥ ११ ॥ १३
२ ॥ ११ ॥ १४
२ ॥ ११ ॥ १५

२ ॥ १२ ॥ १३
२ ॥ १२ ॥ १४
२ ॥ १२ ॥ १५

५३

३ ॥ ४ ॥ ८
३ ॥ ४ ॥ ९
३ ॥ ४ ॥ १०
३ ॥ ४ ॥ ११
३ ॥ ४ ॥ १२
३ ॥ ४ ॥ १३
३ ॥ ४ ॥ १४
३ ॥ ४ ॥ १५

३ ॥ ५ ॥ ८
३ ॥ ५ ॥ ९
३ ॥ ५ ॥ १०
३ ॥ ५ ॥ ११
३ ॥ ५ ॥ १२
३ ॥ ५ ॥ १३
३ ॥ ५ ॥ १४
३ ॥ ५ ॥ १५

३ ॥ ६ ॥ ८
३ ॥ ६ ॥ ९
३ ॥ ६ ॥ १०
३ ॥ ६ ॥ ११
३ ॥ ६ ॥ १२
३ ॥ ६ ॥ १३
३ ॥ ६ ॥ १४
३ ॥ ६ ॥ १५

३ ॥ ७ ॥ ८
३ ॥ ७ ॥ ९
३ ॥ ७ ॥ १०
३ ॥ ७ ॥ ११
३ ॥ ७ ॥ १२
३ ॥ ७ ॥ १३
३ ॥ ७ ॥ १४
३ ॥ ७ । १५

३ ॥ ८ ॥ १०
३ ॥ ८ ॥ ११
३ ॥ ८ ॥ १२
३ ॥ ८ ॥ १३
३ ॥ ८ ॥ १४
३ ॥ ८ ॥ १५

३ ॥ ९ ॥ १०
३ ॥ ९ ॥ ११
३ ॥ ९ ॥ १२
३ ॥ ९ ॥ १३
३ ॥ ९ ॥ १४
३ ॥ ९ ॥ १५

३ ॥ १० ॥ १३
३ ॥ १० ॥ १४
३ ॥ १० ॥ १५

३ ॥ ११ ॥ १३
३ ॥ ११ ॥ १४
३ ॥ ११ ॥ १५

३ ॥ १२ ॥ १३
३ ॥ १२ ॥ १४
३ ॥ १२ ॥ १५

५३ ( ३ )

४ ॥ ८ ॥ १०
४ ॥ ८ ॥ ११
४ ॥ ८ ॥ १२
४ ॥ ८ ॥ १३
४ ॥ ८ ॥ १४
४ ॥ ८ ॥ १५

४ ॥ ९ ॥ १०
४ ॥ ९ ॥ ११
४ ॥ ९ ॥ १२
४ ॥ ९ ॥ १३
४ ॥ ९ ॥ १४
४ ॥ ९ ॥ १५

४ ॥ १० ॥ १३
४ ॥ १० ॥ १४
४ ॥ १० ॥ १५

४ ॥ ११ ॥ १३
४ ॥ ११ ॥ १४
४ ॥ ११ ॥ १५

४ ॥ १२ ॥ १३
४ ॥ १२ ॥ १४
४ ॥ १२ ॥ १५

२१ ( १ )

५ ॥ ८ ॥ १०
५ ॥ ८ ॥ ११
५ ॥ ८ ॥ १२
५ ॥ ८ ॥ १३
५ ॥ ८ ॥ १४

५ ॥ ८ ॥ १५

५ ॥ ९ ॥ १०
५ ॥ ९ ॥ ११
५ ॥ ९ ॥ १२
५ ॥ ९ ॥ १३
५ ॥ ९ ॥ १४
५ ॥ ९ ॥ १५

५ ॥ १० ॥ १३
५ ॥ १० ॥ १४
५ ॥ १० ॥ १५

५ ॥ ११ ॥ १३
५ ॥ ११ ॥ १४
५ ॥ ११ ॥ १५

५ ॥ १२ ॥ १३
५ ॥ १२ ॥ १४
५ ॥ १२ ॥ १५

२१ (२)

६ ॥ ८ ॥ १०
६ ॥ ८ ॥ ११
६ ॥ ८ ॥ १२
६ ॥ ८ ॥ १३
६ ॥ ८ ॥ १४
६ ॥ ८ ॥ १५

६ ॥ ९ ॥ १०
६ ॥ ९ ॥ ११
६ ॥ ९ ॥ १२
६ ॥ ९ ॥ १३
६ ॥ ९ ॥ १४
३ ॥ ९ ॥ १५

६ ॥ १० ॥ १३
६ ॥ १० ॥ १४
६ ॥ १० ॥ १५

६ ॥ ११ ॥ १३
६ ॥ ११ ॥ १४
६ ॥ ११ ॥ १५

६ ॥ १२ ॥ १३
६ ॥ १२ ॥ १४
६ ॥ १२ ॥ १५

२१ (३)

७ ॥ ८ ॥ १०
७ ॥ ८ ॥ ११
७ ॥ ८ ॥ १२
७ ॥ ८ ॥ १३
७ ॥ ८ ॥ १४
७ ॥ ८ ॥ १५

७ ॥ ९ ॥ १०
७ ॥ ९ ॥ ११
७ ॥ ९ ॥ १२
७ ॥ ९ ॥ १३
७ ॥ ९ ॥ १४
७ ॥ ९ ॥ १५

७ ॥ १० ॥ १३
७ ॥ १० ॥ १४
७ ॥ १० ॥ १५

७ ॥ ११ ॥ १३
७ ॥ ११ ॥ १४
७ ॥ ११ ॥ १५

७ ॥ १२ ॥ १३
७ ॥ १२ ॥ १४
७ ॥ १२ ॥ १५

२१ (४)

८ ॥ १० ॥ १३
८ ॥ १० ॥ १४
८ ॥ १० ॥ १५

८ ॥ ११ ॥ १३
८ ॥ ११ ॥ १४
८ ॥ ११ ॥ १५

८ ॥ १२ ॥ १३
८ ॥ १२ ॥ १४
८ ॥ १२ ॥ १५

९ (१)

९ ॥ १० ॥ १३
९ ॥ १० ॥ १४
९ ॥ १० ॥ १५

९ ॥ ११ ॥ १३
९ ॥ ११ ॥ १४
९ ॥ ११ ॥ १५

९ ॥ १२ ॥ १३
९ ॥ १२ ॥ १४
९ ॥ १२ ॥ १५

९ (२)

२६१ इति त्रिभेदप्रस्तारः

समाप्तः

अथ चतुर्भेदप्रस्तारः

१।४। ८।१०
१।४। ८।११
१।४। ८।१२
१।४। ८।१३
१।४। ८।१४
१।४। ८।१५

१।४। ९।१०
१।४। ९।११
१।४। ९।१२
१।४। ९।१३
१।४। ९।१४
१।४। ९।१५

१।४।१०।१३
१।४।१०।१४
१।४।१०।१५

१।४।११।१३
१।४।११।१४
१।४।११।१५

१।४।१२।१३
१।४।१२।१४
१।४।१२।१५

१।५। ८।१०
१।५। ८।११
१।५। ८।१२
१।५। ८।१३
१।५। ८।१४
१।५। ८।१५

१।५। ९।१०
१।५। ९।११
१।५। ९।१२
१।५। ९।१३
१।५। ९।१४
१।५। ९।१५

१।५।१०।१३
१।५।१०।१४
१।५।१०।१५

१।५।११।१३
१।५।११।१४
१।५।११।१५

१।५।१२।१३
१।५।१२।१४
१।५।१२।१५

१।६। ८।१०
१।६। ८।११
१।६। ८।१२
१।३। ८।१३
१।६। ८।१४
१।६। ८।१५

१।६। ९।१०
१।६। ९।११
१।६। ९।१२
१।६। ९।१३
१।६। ९।१४
१।६। ९।१५

१।६।१०।१३
१।६।१०।१४
१।६।१०।१५

१।६।११।१३
१।६।११।१४
१।६।११।१५

१।६।१२।१३
१।६।१२।१४
१।६।१२।१५

१।७। ८।१०
१।७। ८।११
१।७। ८।१२
१।७। ८।१३
१।७। ८।१४
१।७। ८।१५

१।७। ९।१०
१।७। ९।११
१।७। ९।१२
१।७। ९।१३
१।७। ९।१४
१।७। ९।१५

१।७।१०।१३
१।७।१०।१४
१।७।१०।१५

१।७।११।१३
१।७।११।१४
१।७।११।१५

१।७।१२।१३
१।७।१२।१४
१।७।१२।१५

१।८।१०।१३
१।८।१०।१४
१।८।१०।१५

१।८।११।१३
१।८।११।१४
१।८।११।१५

१।८।१२।१३
१।८।१२।१४
१।८।१२।१५

१।९।१०।१३
१।९।१०।१४
१।९।१०।१५

१।९।११।१३
१।९।११।१४
१।९।११।१५

१।९।१२।१३
१।९।१२।१४
१।९।१२।१५

१०२ (१)

२।४। ८।१०
२।४। ८।११
२।४। ८।१२
२।४। ८।१३
२।४। ८।१४
२।४। ८।१५

२।४। ९।१०
२।४। ९।११
२।४। ९।१२
२।४। ९।१३
२।४। ९।१४
२।४। ९।१५

२।४।१०।१३
२।४।१०।१४
२।४।१०।१५

२।४।११।१३
२।४।११।१४
२।४।११।१५

२।४।१२।१३
२।४।१२।१४
२।४।१२।१५

२।५। ८।१०
२।५। ८।११
२।५। ८।१२
२।५। ८।१३
२।५। ८।१४
२।५। ८।१५

२।५। ९।१०
२।५। ९।११
२।५। ९।१२
२।५। ९।१३
२।५। ९।१४
२।५। ९।१५

२।५।१०।१३
२।५।१०।१४
२।५।१०।१५

२।५।११।१३
२।५।११।१४
२।५।११।१५

२।५।१२।१३
२।५।१२।१४
२।५।१२।१५

२।६। ८।१०
२।६। ८।११
२।६। ८।१२
२।६। ८।१३
२।६। ८।१४
२।६। ८।१५

२।६। ९।१०
२।६। ९।११
२।६। ९।१२
२।६। ९।१३
२।६। ९।१४
२।६। ९।१५

२।६।१०।१३
२।६।१०।१४
२।६।१०।१५

२।६।११।१३
२।६।११।१४
२।६।११।१५

२।६।१२।१३
२।६।१३।१४
२।६।१४।१५

२।७। ८।१०
२।७। ८।११
२।७। ८।१२
२।७। ८।१३
२।७। ८।१४
२।७। ८।१५

२।७। ९।१०
२।७। ९।११
२।७। ९।१२
२।७। ९।१३
२।७। ९।१४
२।७। ९।१५

२।७।१०।१३
२।७।१०।१४
२।७।१०।१५

२।७।११।१३
२।७।११।१४
२।७।११।१५

२।७।१२।१३
२।७।१२।१४
२।७।१२।१५

२।८।१०।१३
२।८।१०।१४
२।८।१०।१५

२।८।११।१५
२।८।११।१३
२।८।११।१४

२।८।१२।१४
२।८।१२।१५
२।८।१२।१३

२।९।१०।१५
२।९।१०।१३
२।९।१०।१४

२।९।११।१५
२।९।११।१३
२।९।११।१४

૨।૯।૧૨।૧૩
૨।૯।૧૨।૧૪
૨।૯।૧૨।૧૫

૧૦૨ (૨)

૩।૪। ૮।૧૦
૩।૪। ૮।૧૧
૩।૪। ૮।૧૨
૩।૪। ૮।૧૩
૩।૪। ૮।૧૪
૩।૪। ૮।૧૫

૩।૪। ૯।૧૦
૩।૪। ૯।૧૧
૩।૪। ૯।૧૨
૩।૪। ૯।૧૩
૩।૪। ૯।૧૪
૩।૪। ૯।૧૫

૩।૪।૧૦।૧૩
૩।૪।૧૦।૧૪
૩।૪।૧૦।૧૫

૩।૪।૧૧।૧૩
૩।૪।૧૧।૧૪
૩।૪।૧૧।૧૫

૩।૪।૧૨।૧૩
૩।૪।૧૨।૧૪
૩।૪।૧૨।૧૫

૩।૫। ૮।૧૦
૩।૫। ૮।૧૧
૩।૫। ૮।૧૨
૩।૫। ૮।૧૩
૩।૫। ૮।૧૪
૩।૫। ૮।૧૫

૩।૫। ૯।૧૦
૩।૫। ૯।૧૧
૩।૫। ૯।૧૨
૩।૫। ૯।૧૩
૩।૫। ૯।૧૪
૩।૫। ૯।૧૫

૩।૫।૧૦।૧૩
૩।૫।૧૦।૧૪
૩।૫।૧૦।૧૫

૩।૫।૧૧।૧૩
૩।૫।૧૧।૧૪
૩।૫।૧૧।૧૫

૩।૫।૧૨।૧૩
૩।૫।૧૨।૧૪
૩।૫।૧૨।૧૫

૩।૬। ૮।૧૦
૩।૬। ૮।૧૧
૩।૬। ૮।૧૨
૩।૬। ૮।૧૩
૩।૬। ૮।૧૪
૩।૬। ૮।૧૫

૩।૬। ૯।૧૦
૩।૬। ૯।૧૧
૩।૬। ૯।૧૨
૩।૬। ૯।૧૩
૩।૬। ૯।૧૪
૩।૬। ૯।૧૫

૩।૬।૧૦।૧૩
૩।૬।૧૦।૧૪
૩।૬।૧૦।૧૫

૩।૬।૧૧।૧૩
૩।૬।૧૧।૧૪
૩।૬।૧૧।૧૫

૩।૬।૧૨।૧૩
૩।૬।૧૩।૧૪
૩।૬।૧૪।૧૫

૩।૭। ૮।૧૦
૩।૭। ૮।૧૧
૩।૭। ૮।૧૨
૩।૭। ૮।૧૩
૩।૭। ૮।૧૪
૩।૭। ૮।૧૫

૩।૭। ૯।૧૦
૩।૭। ૯।૧૧
૩।૭। ૯।૧૨
૩।૭। ૯।૧૩
૩।૭। ૯।૧૪
૩।૭। ૯।૧૫

૩।૭।૧૦।૧૩
૩।૭।૧૦।૧૪
૩।૭।૧૦।૧૫

૩।૭।૧૧।૧૩
૩।૭।૧૧।૧૪
૩।૭।૧૧।૧૫

૩।૭।૧૨।૧૩
૩।૭।૧૨।૧૪
૩।૭।૧૨।૧૫

૩।૮।૧૦।૧૩
૩।૮।૧૦।૧૪
૩।૮।૧૦।૧૫

૩।૮।૧૧।૧૩
૩।૮।૧૧।૧૪
૩।૮।૧૧।૧૫

૩।૮।૧૨।૧૩
૩।૮।૧૨।૧૪
૩।૮।૧૨।૧૫

૩।૯।૧૦।૧૩
૩।૯।૧૦।૧૪
૩।૯।૧૦।૧૫

૩।૯।૧૧।૧૩
૩।૯।૧૧।૧૪
૩।૯।૧૧।૧૫

૩।૯।૧૨।૧૩
૩।૯।૧૨।૧૪
૩।૯।૧૨।૧૫

૧૦૨ (૩)

| | | | |
|---|---|---|---|
| ४।८।१०।१३ | ४।८।११।१३ | ४।८।१२।१३ | |
| ४।८।१०।१४ | ४।८।११।१४ | ४।८।१२।१४ | |
| ४।८।१०।१५ | ४।८।११।१५ | ४।८।१२।१५ | १८ (१) |
| ४।९।१०।१३ | ४।९।११।१३ | ४।९।१२।१३ | |
| ४।९।१०।१४ | ४।९।११।१४ | ४।९।१२।१४ | |
| ४।९।१०।१५ | ४।९।११।१५ | ४।९।१२।१५ | |
| ५।८।१०।१३ | ५।८।११।१३ | ५।८।१२।१३ | |
| ५।८।१०।१४ | ५।८।११।१४ | ५।८।१२।१४ | |
| ५।८।१०।१५ | ५।८।११।१५ | ५।८।१२।१५ | १८ (२) |
| ५।९।१०।१३ | ५।९।११।१३ | ५।९।१२।१३ | |
| ५।९।१०।१४ | ५।९।११।१४ | ५।९।१२।१४ | |
| ५।९।१०।१५ | ५।९।११।१५ | ५।९।१२।१५ | |
| ६।८।१०।१३ | ६।८।११।१३ | ६।८।१२।१३ | |
| ६।८।१०।१४ | ६।८।११।१४ | ६।८।१२।१४ | |
| ६।८।१०।१५ | ६।८।११।१५ | ६।८।१२।१५ | १८ (३) |
| ६।९।१०।१३ | ६।९।११।१३ | ६।९।१२।१३ | |
| ६।९।१०।१४ | ६।९।११।१४ | ६।९।१२।१४ | |
| ६।९।१०।१५ | ६।९।११।१५ | ६।९।१२।१५ | |
| ७।८।१०।१३ | ७।८।११।१३ | ७।८।१२।१३ | |
| ७।८।१०।१४ | ७।८।११।१४ | ७।८।१२।१४ | |
| ७।८।१०।१५ | ७।८।११।१५ | ७।८।१२।१५ | १८ (४) |
| ७।९।१०।१३ | ७।९।११।१३ | ७।९।१२।१३ | |
| ७।९।१०।१४ | ७।९।११।१४ | ७।९।१२।१४ | |
| ७।९।१०।१५ | ७।९।११।१५ | ७।९।१२।१५ | |
| | | | ३७८ |

इति चतुर्भेदप्रस्तारः

## अथ पञ्चभेदप्रस्तारः

| | | |
|---|---|---|
| १।४।८।१०।१३ | १।५।८।१२।१३ | १।६।९।११।१३ |
| १।४।८।१०।१४ | १।५।८।१२।१४ | १।६।९।११।१४ |
| १।४।८।१०।१५ | १।५।८।१२।१५ | १।६।९।११।१५ |
| १।४।८।११।१३ | १।५।९।१०।१३ | १।६।९।१२।१३ |
| १।४।८।११।१४ | १।५।९।१०।१४ | १।६।९।१२।१४ |
| १।४।८।११।१५ | १।५।९।१०।१५ | १।६।९।१२।१५ |
| १।४।८।१२।१३ | १।५।९।११।१३ | १।७।८।१०।१३ |
| १।४।८।१२।१४ | १।५।९।११।१४ | १।७।८।१०।१४ |
| १।४।८।१२।१५ | १।५।९।११।१५ | १।७।८।१०।१५ |
| १।४।९।१०।१३ | १।५।९।१२।१३ | १।७।८।११।१३ |
| १।४।९।१०।१४ | १।५।९।१२।१४ | १।७।८।११।१४ |
| १।४।९।१०।१५ | १।५।९।१२।१५ | १।७।८।११।१५ |
| १।४।९।११।१३ | १।६।८।१०।१३ | १।७।८।१२।१३ |
| १।४।९।११।१४ | १।६।८।१०।१४ | १।७।८।१२।१४ |
| १।४।९।११।१५ | १।६।८।१०।१५ | १।७।८।१२।१५ |
| १।४।९।१२।१३ | १।६।८।११।१३ | १।७।९।१०।१३ |
| १।४।९।१२।१४ | १।६।८।११।१४ | १।७।९।१०।१४ |
| १।४।९।१२।१५ | १।६।८।११।१५ | १।७।९।१०।१५ |
| १।५।८।१०।१३ | १।६।८।१२।१३ | १।७।९।११।१३ |
| १।५।८।१०।१४ | १।६।८।१२।१४ | १।७।९।११।१४ |
| १।५।८।१०।१५ | १।६।८।१२।१५ | १।७।९।११।१५ |
| १।५।८।११।१३ | १।६।९।१०।१३ | १।७।९।१२।१३ |
| १।५।८।११।१४ | १।६।९।१०।१४ | १।७।९।१२।१४ |
| १।५।८।११।१५ | १।६।९।१०।१५ | १।७।९।१२।१५ |

७२ ( १ )

| | | |
|---|---|---|
| ૨।૪।૮।૧૦।૧૩ | ૨।૫।૮।૧૨।૧૩ | ૨।૬।૯।૧૧।૧૩ |
| ૨।૪।૮।૧૦।૧૪ | ૨।૫।૮।૧૨।૧૪ | ૨।૬।૯।૧૧।૧૪ |
| ૨।૪।૮।૧૦।૧૫ | ૨।૫।૮।૧૨।૧૫ | ૨।૬।૯।૧૧।૧૫ |
| ૨।૪।૮।૧૧।૧૩ | ૨।૫।૯।૧૦।૧૩ | ૨।૬।૯।૧૨।૧૩ |
| ૨।૪।૮।૧૧।૧૪ | ૨।૫।૯।૧૦।૧૪ | ૨।૬।૯।૧૨।૧૪ |
| ૨।૪।૮।૧૧।૧૫ | ૨।૫।૯।૧૦।૧૫ | ૨।૬।૯।૧૨।૧૫ |
| ૨।૪।૮।૧૨।૧૩ | ૨।૫।૯।૧૧।૧૩ | ૨।૭।૮।૧૦।૧૩ |
| ૨।૪।૮।૧૨।૧૪ | ૨।૫।૯।૧૧।૧૪ | ૨।૭।૮।૧૦।૧૪ |
| ૨।૪।૮।૧૨।૧૫ | ૨।૫।૯।૧૧।૧૫ | ૨।૭।૮।૧૦।૧૫ |
| ૨।૪।૯।૧૦।૧૩ | ૨।૫।૯।૧૨।૧૩ | ૨।૭।૮।૧૧।૧૩ |
| ૨।૪।૯।૧૦।૧૪ | ૨।૫।૯।૧૨।૧૪ | ૨।૭।૮।૧૧।૧૪ |
| ૨।૪।૯।૧૦।૧૫ | ૨।૫।૯।૧૨।૧૫ | ૨।૭।૮।૧૧।૧૫ |
| ૨।૪।૯।૧૧।૧૩ | ૨।૬।૮।૧૦।૧૩ | ૨।૭।૮।૧૨।૧૩ |
| ૨।૪।૯।૧૧।૧૪ | ૨।૬।૮।૧૦।૧૪ | ૨।૭।૮।૧૨।૧૪ |
| ૨।૪।૯।૧૧।૧૫ | ૨।૬।૮।૧૦।૧૫ | ૨।૭।૮।૧૨।૧૫ |
| ૨।૪।૯।૧૨।૧૩ | ૨।૬।૮।૧૧।૧૩ | ૨।૭।૯।૧૦।૧૩ |
| ૨।૪।૯।૧૨।૧૪ | ૨।૬।૮।૧૧।૧૪ | ૨।૭।૯।૧૦।૧૪ |
| ૨।૪।૯।૧૨।૧૫ | ૨।૬।૮।૧૧।૧૫ | ૨।૭।૯।૧૦।૧૫ |
| ૨।૫।૮।૧૦।૧૩ | ૨।૬।૮।૧૨।૧૩ | ૨।૭।૯।૧૧।૧૩ |
| ૨।૫।૮।૧૦।૧૪ | ૨।૬।૮।૧૨।૧૪ | ૨।૭।૯।૧૧।૧૪ |
| ૨।૫।૮।૧૦।૧૫ | ૨।૬।૮।૧૨।૧૫ | ૨।૭।૯।૧૧।૧૫ |
| ૨।૫।૮।૧૧।૧૩ | ૨।૬।૯।૧૦।૧૩ | ૨।૭।૯।૧૨।૧૩ |
| ૨।૫।૮।૧૧।૧૪ | ૨।૬।૯।૧૦।૧૪ | ૨।૭।૯।૧૨।૧૪ |
| ૨।૫।૮।૧૧।૧૫ | ૨।૬।૯।૧૦।૧૫ | ૨।૭।૯।૧૨।૧૫ |

૭૨ ( ૨ )

| | | |
|---|---|---|
| ३।४।८।१०।१३ | ३।५।८।१२।१३ | ३।६।९।११।१३ |
| ३।४।८।१०।१४ | ३।५।८।१२।१४ | ३।६।९।११।१४ |
| ३।४।८।१०।१५ | ३।५।८।१२।१५ | ३।६।९।११।१५ |
| ३।४।८।११।१३ | ३।५।९।१०।१३ | ३।६।९।१२।१३ |
| ३।४।८।११।१४ | ३।५।९।१०।१४ | ३।६।९।१२।१४ |
| ३।४।८।११।१५ | ३।५।९।१०।१५ | ३।६।९।१२।१५ |
| ३।४।८।१२।१३ | ३।५।९।११।१३ | ३।७।८।१०।१३ |
| ३।४।८।१२।१४ | ३।५।९।११।१४ | ३।७।८।१०।१४ |
| ३।४।८।१२।१५ | ३।५।९।११।१५ | ३।७।८।१०।१५ |
| ३।४।९।१०।१३ | ३।५।९।१२।१३ | ३।७।८।११।१३ |
| ३।४।९।१०।१४ | ३।५।९।१२।१४ | ३।७।८।११।१४ |
| ३।४।९।१०।१५ | ३।५।९।१२।१५ | ३।७।८।११।१५ |
| ३।४।९।११।१३ | ३।६।८।१०।१३ | ३।७।८।१२।१३ |
| ३।४।९।११।१४ | ३।६।८।१०।१४ | ३।७।८।१२।१४ |
| ३।४।९।११।१५ | ३।६।८।१०।१५ | ३।७।८।१२।१५ |
| ३।४।९।१२।१३ | ३।६।८।११।१३ | ३।७।९।१०।१३ |
| ३।४।९।१२।१४ | ३।६।८।११।१४ | ३।७।९।१०।१४ |
| ३।४।९।१२।१५ | ३।६।८।११।१५ | ३।७।९।१०।१५ |
| ३।५।८।१०।१३ | ३।६।८।१२।१३ | ३।७।९।११।१३ |
| ३।५।८।१०।१४ | ३।६।८।१२।१४ | ३।७।९।११।१४ |
| ३।५।८।१०।१५ | ३।६।८।१२।१५ | ३।७।९।११।१५ |
| ३।५।८।११।१३ | ३।६।९।१०।१३ | ३।७।९।१२।१३ |
| ३।५।८।११।१४ | ३।६।९।१०।१४ | ३।७।९।१२।१४ |
| ३।५।८।११।१५ | ३।६।९।१०।१५ | ३।७।९।१२।१५ |

७२ (३)

२१६

इति पञ्चभेदप्रस्तारः

अथ त्रिभेदप्रस्तारे तीव्रन्याद्या मेलाः त्रिपञ्चाशत् ॥ तीव्रतरन्याद्या मेलास्तावन्त एव ॥ तीव्रतमन्याद्या मेला अपि तावन्त एव॥ साधारणाद्या मेला एकाविंशतिः ॥ अन्तराद्यास्तावन्त एव ॥ मृदुमाद्या स्तावन्त एव ॥ तीव्रतमगाद्या अपि तावन्त एव ॥ तीव्रतममाद्या नव मृदुपा( वे )द्याश्च मेला नवेति ज्ञेयम् ॥ एवं शेषप्रस्तारा अपि बोद्धव्या इति प्रस्तारः ।

**नष्टाङ्के स्वांशाङ्काः पात्या एकाद्यमुखदिशो लेख्या ॥**
**पङ्क्तिः शेषभिदाद्या मूलाख्यात्वन्यथैकाद्या ॥ १८ ॥**

अथ नष्टमार्याचतुष्टयेनाऽऽह—नष्टाङ्क इति।नष्टाङ्के नष्टप्रश्नसङ्ख्यायां स्वांशाङ्का यज्जातीयं नष्टं तदंशाङ्का ऊर्ध्वतः सकृत्सकृत्पात्या न्यूनाः कार्या ऊर्ध्वत इति शेषः॥ सकृत्सकृदित्यग्रे वक्ष्यमाणमिहाप्याकर्षणीयम् ॥ कीदृशास्ते॥ एकाद्यमुखदिशः॥एकाद्यस्तीव्रन्याद्यमेलो मुखमादिर्येषां तीव्रतरन्याद्यमेलानां तान् दिशन्ति कथयन्ति ते तादृशा यैरशाङ्कैर्द्विभेदादिमेलसङ्ख्यासु तीव्रन्याद्यप्रमुखामेला ज्ञायन्त इत्यर्थः ॥
ततः परं कर्तव्यमाह—लेख्येति ॥ मूलाख्या पङ्क्तिर्मूलपङ्क्तिः ॥ शेषभिदाद्या लेख्या ये पातिताः तीव्रन्याद्यमेलबोधका अंशाङ्कास्तेभ्यः परं शेषाया भिदा पञ्चदशान्यतमो भेदः स आद्यः प्रथमो यस्या एवंविधा सती लेख्या तं शेषभेदमादौ लिखित्वाऽग्रे चत्वारोऽष्टौ दश त्रयोदशेति यथासम्भवं लेख्येत्यर्थः । यत्र स्वांशाङ्कः प्रथमो न पतति तत्र मूलपङ्क्तेर्लिखने विशेषमाह—त्वन्यथेति ॥ अन्यथा तु एकाद्या लेख्येत्येव ॥ एकश्चत्वार इत्यादिका शुद्धैव मूलपङ्क्तिर्लिख्येत्यर्थः ॥ १८ ॥

**प्राच्यप्राच्यांशाङ्कैः शेषं शेषं सकृत्सकृद्धाज्यम् ॥**
**दृष्टभिदोधस्थैरप्रथमैर्लब्धयोग्यार्हैः ॥ १९ ॥**

ततः परं कर्तव्यमाह—प्राच्येति ॥ प्राच्यप्राच्यांशाङ्कै यज्जातीकं नष्टं पञ्चभेदचतुर्भेदादिस्थं ततः पूर्वे पूर्वे ये चतुर्भेदत्रिभेदादीनामंशाङ्कास्तैः शेषं शेषं सकृद्धाज्यम् ॥ एकैकवारमेव हरणीयं । कीदृशैस्तैः ! दृष्टभिदः तादृश-

मूलपङ्क्तौ दृष्टात् ॥ साधारणादिभेदादधोऽधस्थैः ॥ तत्र हेतुमाह—अप्रथमैस्त्रिस्थोर्ध्वाङ्कव्यतिरिक्तैः॥ साधारणाद्यधस्थेष्वपि विशेषमाह–लब्धयोग्यार्हैः॥ वक्ष्यमाणलब्धस्य योगो योजनं तदस्यास्तीति लब्धयोगी मूलपङ्क्तिस्थभेदः तस्यार्हैस्तज्जातीयैः साधारणाद्यंशाङ्कैर्भाजनसम्भवेति चेत् लब्धं मूलपङ्क्तौ तीव्रतमन्यादिभिर्योज्यते तर्हि तीव्रतममाद्याधोधःस्थैरित्यर्थः ॥ १९ ॥

**रक्ष्यं तथैव शेषं यथा तु तद्योगतोऽतिमेन भवेत् ॥**
**समतोनता च पूर्वेणैकस्वरभेदता वासितौ ॥ २० ॥**
**क्रमतोन्त्यात्तुर्यादिषु लब्धयोज्यं चतुर्भिदादिभवैः ॥**
**भागेऽशाङ्कैरन्ते शेषपातं तथैकोनम् ॥ २१ ॥**

यत्र निःशेषमंशाङ्कपतनं तत्र शेषं रक्षणीयं तदपि च सविशेषमित्याह—**रक्ष्यमिति** ॥ शेषं तथा रक्ष्यं रक्षणीयमेव । एवशब्दो भिन्नक्रमः॥ यथातु येन प्रकारेण त्वन्तिमे मूलाङ्कपङ्क्तेरन्त्याङ्के तद्योगतो वक्ष्यमाणेनैकोनशेषयोगेनावसितावसानेऽन्त इति यावत् ॥ पूर्वेण समता ऊनता एकस्वरभेदता च न भवेत् ॥एकोनशेषस्यान्त्याङ्के मेलने यथान्त्यभेदः पूर्वभेदेन सहाभिन्नः ततो न्यूनो वा पूर्वभेदो यस्य स्वरस्य तस्यैव भेदो वा तस्मात्॥तथा विचार्य शेषं रक्षणीयम् ॥ अन्यथाऽशास्त्रीयता स्यादिति भावः॥ मूलाङ्कपङ्क्तेरन्त्याङ्कात्पूर्वेष्वपि एवमेवसमतोनतेत्यादि विचार्य लब्धमात्रयोगो ज्ञेयः ॥ २० ॥ एवमंशाङ्के सकृत्सकृद्भाजने एकैकाङ्करूपस्य लब्धस्य योगे योग्यात् मूलपङ्क्तिभेदानाह—**क्रमत इति** ॥ चतुर्भेदादिभवैरंशाङ्के भागे यल्लब्धं न क्रमतोन्त्यात् तुर्यादिषु योज्यम् ॥ पञ्चभेदनष्टे चतुर्भेदांशाङ्कैर्भाजने लब्धा एकाङ्का एकीकृत्य मूलपङ्क्तेरन्त्याच्चतुर्थे योज्याः ॥ त्रिभेदांशाङ्कैर्मूलपङ्क्तेरन्त्यात्तृतीये ॥ द्विभेदांशाङ्कैर्मूलपङ्क्तेरन्त्याद्द्वितीये योज्याः ॥ चतुर्भेदे नष्टे त्रिभेदांशाङ्कैर्भाजने लब्धा एकाङ्कास्तान्मूलपङ्क्तेरन्त्यात्तृतीये योज्याः । द्विभेदांशाङ्के० तदन्त्याद्द्वितीये ॥ त्रिभेदनष्टे द्विभेदांशाङ्के० तदन्त्याद्द्वितीये योज्याः ॥ द्विभेदनष्टे एकभेदांशाङ्के० एकाङ्करूपैर्भाजने लब्धा एकाङ्काः ॥ तन्मू-

लपङ्क्तेरन्त्याङ्के योज्यम् ॥ तथा चार्थे चपरम् ॥ अद्यांतं यत्र स्वांशाङ्कपातो न सम्भवति तदप्यङ्कजातं एकोनं कृत्वा पूर्ववदन्ते योज्यम् ॥ तत एतादृशो नष्टमेल इति कथनीयम् ॥ अत्रोदाहरणं त्रिभेदमेलप्रस्तारे पञ्चपञ्चाशदधिकशतस्य पूरणं मेलरूपं कीदृगिति प्रश्ने तत्सङ्ख्यायाः १५५ प्रथमः स्वांशाङ्कः तीव्रन्याद्यमेलबोधकस्त्रिपञ्चाशदङ्क उपपात्यते ॥ शेषं द्व्यधिकशतं १०२ तस्मिन्नपि द्वितीयः स्वांशाङ्कस्तीव्रतरन्याद्यमेलबोधकत्रिपञ्चाशदाङ्ककरूप एव पुनः पात्यते शेषमेकोनपञ्चाशत् ॥ ततः शेषभिदाद्या तीव्रतमारिभेदाद्यास्त्रयश्चत्वारोऽष्टौ च ३।४।८ इतिमूलपङ्क्तिर्लेख्यते ॥ ततोऽप्रथमैर्द्वादशाङ्कव्यतिरिक्तैर्दृष्टभिदो मूलपङ्क्तौ दृष्टस्य चतुरङ्करूपसाधारणस्य भेदात् ॥ ऊर्ध्वादष्टाङ्कादधोधःस्थैस्त्रिभिरन्तरादीनामष्टाङ्कैर्द्वाभ्यां तीव्रतममृदुपयोः षडङ्काभ्यां तीव्रधतीव्रतरधयोर्द्वाभ्यां त्र्यङ्काभ्यां । चैकोनपञ्चाशद्रूपे ४९ शेषे सकृत्सकृद्भाजिते सर्वशेषं सप्ताङ्कः ७ लब्धा अपि सप्त एकाङ्काः ततः द्विभेदांशाङ्कै र्भागे लब्धाः सप्त एकाङ्का मूल पङ्क्तेरन्त्यात् द्वितीये चतुरङ्के योज्यंते। शेषः सप्ताङ्कस्तु एकोनषडङ्करूपः सन्नन्ते मूलपङ्क्तेरष्टाङ्के योज्यते ततश्च त्रयः एकादश चतुर्दश चेति ३।११ १४ नष्टमेलरूपं कथनीयम् ॥ अत्र द्वाभ्यामेव त्र्यङ्काभ्यां भागो युक्तः त्रिभिस्त्र्यङ्कैश्चेद्भागो गृह्येत तर्हि सर्वशेषं चतुरङ्कः स्यात् ॥ लब्धाश्चाष्टावेकाङ्काः स्युः । ततश्च पूर्ववद्योजने क्रियमाणे त्रयोद्वादश एकादशेति ३ ।१२।११ क्रमहानेरशास्त्रीयता प्रसज्यते ततस्तथा शेषं नव स्थाप्यम् ॥ एवमन्यद्व्यादिभेदप्रस्तारनष्टमध्य एवमेव ज्ञेयम् ॥ २१ ॥

यद्भेदाद्युद्दिष्टं तद्भेदाद्येवमूलमुल्लेख्यम् ॥
एकाङ्कैर्यावद्भिर्मूलाद्वृद्धाद्भिदा अस्या ॥ २२ ॥
प्राच्यप्राच्यांशाङ्कास्तावन्तो नष्टवत्तु लभ्येरन् ॥
शेषैः स्वांशाङ्कैः सह लब्धैक्ये सैकमुद्दिष्टम् ॥ २३ ॥

अथोद्दिष्टं द्वाभ्यामाह—यद्भेदादीति ॥ उद्दिष्टं उद्दिष्टस्वरूपं सत्सङ्ख्या-

विषयत्वेन पृष्टं मेलरूपं यद्भेदादि यो भेद आदिर्यस्य तादृशं वर्तेत इति शेषः॥ तद्भेदाद्येव सभेद आदिर्यस्य एतादृशमेव मूलमुल्लेख्यं उर्ध्वं लेखनीयं ॥ मूलपङ्क्तिरप्युद्दिष्टप्रथमभेदादिः सती उद्दिष्टपङ्क्तेरूर्ध्वं लेखनीयेत्यर्थः ॥ ततः किं तत्राऽऽह—एकाङ्कैरिति ॥

अस्योद्दिष्टपङ्क्तिरूपस्य भिदा साधारणाद्यन्यतमभेदा मूलान्मूलपङ्क्ति-साधारणादिभेदेभ्यः यावद्भिरेकाङ्कैर्वृद्धा अधिकाः तावन्तः प्राच्यप्राच्यांशाङ्काः लभ्येरन् लब्धा भवेयुः ॥ कथं? नष्टवत् नष्टेन तुल्यं ॥ ततश्च पञ्चभेदादिके उद्दिष्टे मूलपङ्क्तेरन्त्यचतुर्थादिभ्यो यावन्त एकाङ्काः उद्दिष्टस्यान्त्यचतुर्थादिष्वधिकाः तावान्त एव चतुर्भेदादीनां अंशाङ्का अप्रथमा लब्धयोग्याहाश्च क्रमेण लक्ष्यन्ते । ततः परं कर्तव्यमाह—शेषैरिति ॥ शेषैः स्वांशाङ्कैः सह उद्दिष्टाद्यो यो भेदः ततः पूर्वे ये भेदास्तद्बोधकैरंशाङ्कैः सार्धं लब्धैक्ये लब्धानां प्राच्यप्राच्यांशानामेकीकरणे सति उद्दिष्टं भवेदिति शेषः ॥ कीदृशं सैकं अन्ते पुनरेकेन सहितं । अत्रोदाहरणं ॥ त्रिभेदप्रस्तारे त्रय एकादश चतुर्दशेति ३।११।१४ मेलरूपं कथं इति सङ्ख्याप्रश्नोद्दिष्टस्य त्र्यङ्काद्यत्वान्मूलपङ्क्तिरपि त्र्यङ्काद्येव उद्दिष्टपङ्क्तेरूर्ध्वं लिख्यते ३।४।८ ततश्च मूलपङ्क्तेरन्त्यद्वितीयचतुरङ्कापेक्षयोद्दिष्टपङ्क्तेरन्त्यद्वितीय एकादशाङ्काः सप्तभिरेकाङ्कैरधिक इति सप्तैव द्वितीयभेदांशाङ्का नष्टवत् द्वादश व्यतिरिक्ताः दृष्टभेदात् ऊर्ध्वादष्टाङ्कादधोधःस्थाः अष्ट अष्ट अष्ट षट् षट् त्रयः त्रयः इति लब्धाः सप्तैव ॥ तथा मूलपङ्क्तेरन्त्याष्टाङ्कापेक्षयोद्दिष्टपङ्क्तेरन्त्यश्चतुर्दशाङ्कः षड्भिरेकाङ्कैरधिक इति षडपि लब्धाः तथा उद्दिष्टाद्योभेदस्त्र्यङ्कस्ततः पूर्वौ तीव्रत्याद्यतीव्रतरन्याद्यबोधकौ त्रिपञ्चाशदङ्कौ ताभ्यां सह सर्वेषां लब्धानामैक्ये सति अन्ते पुनरेकेनसहितत्वे च सति पञ्चपञ्चाशदधिकशतसंख्या सम्पद्यते ॥ ततश्च त्रय एकादश चतुर्दशेति मेलस्वरूपं पञ्चपञ्चाशदधिकशतस्य पूरणं कथनीयं ॥ एवं शेषमेलोद्दिष्टानि ज्ञेयानि॥ २२ ॥ २३ ॥

**एकश्रुतिस्थभेदद्वयानिषुदिशस्त्यजेदिह तु मेलान् ॥**
**क्रमसपुनरुक्तिकूटवदुक्तान् प्रस्तारसिद्ध्यर्थम् ॥ २४ ॥**

अथ षष्टयधिकनवशतीमितमेलेषु पञ्चोत्तरं शतं अशास्त्रीयत्वात् त्याजयति—एकश्रुतिस्थेति ॥ इह तु एषु मेलेषु तु इषुदिशः मेलान् त्यजेत् ॥ अशास्त्रीयत्वादिति शेषः ॥ तत्र हेतुगर्भं विशेषणमाह—कीदृशान्? ॥ एकश्रुतिस्थभेदद्वयान् ॥ एकश्रुतिस्थानि अभिन्नश्रुतौ वर्तमानानि भेदद्वयानि तीव्रतमरिसाधारणरूपाणि ३।४ तीव्रतमधकैशिकिरूपाणि च १२।१३ येषु तान् ॥ इह येभ्यो भेदेभ्यः पूर्वस्थाने यथासम्भवं षड्जादयः स्वस्वश्रुतिस्थाः परश्रुतिस्था वा अन्यभेदैरंतर्गिलिता वा सम्भवन्ति तद्भेदवन्तो मेलाः शास्त्रीया अन्ये त्वशास्त्रीयाः ॥ ततश्च मस्य प्रथमश्रुतिस्थात् तीव्रतमरेः पूर्वं षड्जे सम्भवत्यपि तदैव मस्य प्रथमश्रुतिस्थादेव साधारणात् पूर्वं यथा तथापि ऋषभस्यासम्भव इति तयोः सहावस्थाने अशास्त्रीयत्वं ॥ एवं षड्जप्रथमश्रुतिस्थयोस्तीव्रतमधकैशिकिनोः सहावस्थानेप्यशास्त्रीयत्वं॥तत्र द्विभेदेषु द्वौ २ त्रिभेदेषु सप्तदश १७ चतुर्भेदेषु षट्चत्वारिंशदुत्तरसप्तशतानि ७४६ पञ्चभेदेषु चत्वारिंशत् ४० इति ज्ञेयं ॥ अतस्तेषु त्यक्तेषु पञ्चपञ्चाशदधिकान्यष्टौशतानि ८५५ शास्त्रीयाः ॥ एते यदि त्याज्यास्तर्हि संख्यायां किमित्युक्ता इत्यत्रोत्तरगर्भं विशेषणमाह—पुनः कीदृशान् ॥ प्रस्तारसिद्ध्यर्थं उक्तान् संख्यायातमिति शेषः ॥ प्रस्तारोऽत्र नष्टोद्दिष्टयोरप्युपलक्षणं ॥ यदि तद्गणना न क्रियेत तर्हि प्रस्तारनष्टोद्दिष्टानि न सिध्येयुरिति भावः ॥ अत्र दृष्टान्तमाह—किंवत् ॥ क्रमसपुनरुक्तिकूटवत् ॥ क्रमाश्च पुनरुक्त्या सहिताः कूटाः कूटतानाश्च तैः तुल्यं ॥ यथा प्राचीनैरकूटताना अपि क्रमाः पुनरुक्तकूटतानाश्च कूटतानसंख्यायां प्रस्तारादिसिद्ध्यर्थं गण्यन्ते ॥ २४ ॥

संख्याप्रस्तारादि प्रोक्तमिति मया प्रसंगतः कुतुकात् ॥
अनुपेक्ष्यं गुणगृह्यैः प्राचीनानुक्तमपि विबुधैः ॥ २५ ॥
तेषु प्रसिद्धरागैर्विशेषितां विंशतिं ब्रुवे त्र्यधिकाम् ॥
निर्भेद एक एकभिदौ द्वौ द्विभिदस्तु सप्तैव ॥ २६ ॥

संख्याप्रस्तारादि निगमयन् पण्डितान् प्रार्थयते—संख्याप्रस्तारादीति ॥

मया प्रसंगतो मेलनिरूपणप्रसंगे कुतुकात् कौतुकाद्धेतोरिरिति प्रोक्तं ॥ संख्याप्रस्तारादिमेलसंख्याप्रस्तारनष्टोद्दिष्टं प्राचीनानुक्तमपि प्राच्यैरकथितमपि विबुधैः अनुपेक्ष्यं न अनादरणीयं ॥ तत्र हेतुमाह—कीदृशैर्गुणगृह्यैः गुणानां गृह्याः पक्षपातिनस्तैः ॥ गृह्यैरिति पदास्वैरितिपक्षार्थे ग्रहेः क्यप् ॥ २५ ॥ प्रकृतमनुसरन् कतिचनमेलान् वक्तुं प्रतिजानाति—तेष्विति ॥ तेषु शुद्धत्वैकभेदत्वादिभिः षड्विधेषु मेलेषु त्र्यधिकां विंशतिं मेलान् ब्रुवे वक्ष्यामि ॥ कीदृशीं प्रसिद्धरागैर्मुखारीप्रमुखैर्विशेषितां मुखारीमेल इत्यादिसंज्ञकामित्यर्थः ॥ त्रयोविंशतिमेव विवृणोति आर्योत्तरार्धपूर्वाभ्यां निर्भेद इति ॥ निर्भेदः शुद्धस्वरसप्तक एको मेल इति शेषः ॥ एकभिदौ एकैकभेदौ द्वौ ॥ वीप्सा सर्वत्र ज्ञेया ॥ द्विभेदः द्विद्विभेदास्तु सप्तैव ॥ २५ ॥ २६ ॥

**चत्वारस्त्रिविभेदाश्चतुर्भिदोऽष्टौ च पञ्चभिद एकः ॥**
**तत्तन्मेलेष्वधिकाधिकसंख्यास्तेऽप्यरागांस्तान् ॥ २७ ॥**
**वच्मि मुखारीरेवादिगुप्तिरथ सामपूर्वकवराली ॥**
**तोडीनादादिकरामक्रीभैरववसन्ताश्च ॥ २८ ॥**
**भैरव्याद्यवसन्ता मालवगौडोऽथरीतिगौडश्च ॥**
**आभीरनाटहम्मीरवराख्यः शुद्धरामक्रीः ॥ २९ ॥**
**श्रीरागः कल्याणः कांबोदी मल्लवैरिसामन्तौ ॥**
**कर्णाटो देशाक्षी शुद्धो नाटश्च सारंगः ॥ ३० ॥**

चत्वारस्त्रिविभेदाः त्रिविभेदाः ॥ चतुर्भिदः चतुश्चतुर्भेदा अष्टौ ॥ पञ्चभिदा भेदा यस्मिन् सपञ्चभिदः एकः अत्र तु वीप्सान्॥ एकैकभिदादीनामेषां स्वस्वमेलेषूत्तरोत्तर अधिकाधिकसंख्याकत्वं प्रतिजानाति—**तत्तन्मेलेष्विति** ॥ ते मेलाः तत्तन्मेलेषु तेषु तेषु सजातीयेषु मेलेषु अधिकाधिकसंख्या न तूत्तरोत्तरं क्वचिन्न्यूनसंख्याः क्वचिदधिकसंख्या वा इत्यर्थः॥ अथ मेलानामकरान् त्रयोविंशतिसंख्यान् रागान् क्रमेण वक्तुं प्रतिजानाति—**अथ रागांस्तानिति** ॥ वच्मि वक्ष्यामि ॥ तानेवाह—मुखारीत्यादिकेनार्यात्रयेण आद्याक्षरद्वयोनेन ॥ मुखारीस्त्रीलिंगः ॥ रेवादि गुप्तिः रेवगुप्तिः अथ सामपूर्वकवराली सामवराली ॥ तत्र

मुखारी शुद्धमेलनामकरी रेवगुप्तिसामवराल्यौ तु एकभेदनामकारिण्यौ ॥ द्वि-भेदनामकरान् सप्ताऽऽह—**तोडीति** ॥ तोडीत्याद्येकं पदं नादादिरामक्रीः भैरववसन्ताश्चेति च शब्दः पूर्वोक्तैः समुच्चये ॥ आद्यवसन्ताभैरवी ॥ मालवगौडः ॥ अथ रीतिगौडश्च ॥ त्रिभेदमेलनामकरान् चतुर आह ॥ आभीरनाटहम्मीरवराट्य इति आभीरनाट एको रागः हम्मीरो वराटी च ताः शुद्धरामक्रीर्देशीकार इति लोके ॥ चतुर्भेदमेलनामकरान् अष्टावाह ॥ श्रीरागः कल्याणः कांबोदी मल्लवैरिसामन्तौ मल्लारिः सामन्तश्च ॥ अत्र मल्लवैरीति पर्यायेण मल्लारिरुच्यते ॥ यथा निःशंकेन विभाषाः ॥ प्रेंखकेनवेत्यत्रप्रेंखशब्देन हिंदोल उक्तः ॥ कर्णाटकर्णाटगौडः ॥ देशाक्षी । शुद्धो नाट एकरागः ॥ पञ्चभेदमेलनामकरमाह—**सारंग इति** ॥ २८ ॥ २९ ॥ ३० ॥

**इति रागा नामकरा मेलानां गुणदृशा २३ मथ क्रमतः ॥**
**तांस्तु मुखारीमेलप्रभृतीन्वक्ष्यामि लक्षणतः ॥ ३१ ॥**
**सन्ति मुखारीमेले शुद्धाः षड्जादयः स्वराः सप्त ॥**
**स्यादेषास्मान्मेला तुरुष्कतोड्यादिरागाश्च ॥ ३२ ॥**
**मेलेऽथ रेवगुप्तेर्भवंति षट् सरिमपधनयः शुद्धाः ॥**
**गोंतरसंज्ञश्चास्माद्रागाः स्यूरेवगुप्त्याद्याः ॥ ३३ ॥**

निगमयति—**इति रागा इति** ॥ गुणदृशां२३ त्रयोविंशतिसंख्याकानां मेलानां नामकरा इति रागाः ॥ अथैवं तत्तद्रागविशेषिमेलानां प्रत्येकं क्रमतो लक्षणानि वक्तुं प्रतिजानाति—**अथ क्रमत इति** ॥ मुखारीमेलप्रभृतिस्यूतानिति मेलान् लक्षणतः लक्षणेन वक्ष्यामि ॥ ३१ ॥ यथोद्देशं मुखारीमेलं लक्षयति—**संति मुखरीति** ॥ मुखारीमेले षड्जादयः सप्तस्वराः शुद्धाः स्वस्वान्तिमश्रुतिस्थाः सन्ति न तु केऽपि विकृता इत्यर्थः ॥ एतन्मेलभवान्रागानाह—**स्यादेषेति** ॥ अस्मान्मेलादेषातुरुष्कतोड्यादिरागाश्च स्युरिति शेषः ॥ तुरुष्कतोडी हुसेनीति भाषायां ॥ इयं वक्ष्यमाणे तोडीमेलेऽपि कैश्चि-

दुक्ता ॥ मुखारीति मुखं ऋच्छति प्राप्नोति इति ऋधातोः कमर्ण्यनंतात् जी-ष् ॥ ३२ ॥ अथ एकभेदेषु पञ्चमं देवगुप्तिमेलं लक्षयति—**मेलेऽथेति** ॥ अथ रेवगुप्तेः मेले षट् सरिमपधनयः षड्जऋषभमध्यमपञ्चमधैवतनिषादाः शुद्धाः भवन्ति ॥ गः गान्धारः अन्तरसंज्ञश्च मध्यमश्रुतिद्वयग्राही ॥ एतन्मेलभवान्रागानाह—**अस्मादिति** ॥ मेलादित्येव ॥ रेवगुप्त्याद्या रागाः स्युः ॥ ३१ ॥ ३२ ॥ ३३ ॥

**सामवरालीमेले शुद्धाः सरिगमपधाश्च काकलिका ॥**
**अस्मादियं वसन्तवराट्याद्याश्चापरे रागाः ॥ ३४ ॥**
**तोडीमेले साधारणकैशिकिनौ च शुद्धसरिमपधाः ॥**
**तोडीप्रमुखा रागा मेलात्प्रादुर्भवन्त्यस्मात् ॥ ३५ ॥**
**नादादिमरामक्रीमेले साधारणश्च मृदुसः स्यात् ॥**
**शुद्धा अपि सरिमपधा अस्मादेतन्मुखा रागाः ॥ ३६ ॥**

एकभेदेषु चतुर्दशसामवरालीमेलं लक्षयति—**सामेति** ॥ सामवरालीमेले सरिगमपधाः शुद्धाः चपरं काकलिकाषड्जाद्वितीयश्रुतिस्थो निषादः ॥ एतन्मेल० अस्मान्मेलादित्येव ॥ इयं सामवराली चपरं वसन्तवराडी आद्या येषां ते अपरे अन्येपि रागाः स्युरिति शेषः ॥ ३४ ॥ अथ द्विभेदेषु द्वाचत्वारिंशत्तमं ४२ तोडीमेलं लक्षयति—**तोडीमेल इति** ॥ अस्मिन्साधारणकैशिकिनौ ४।१३ साधारणः मध्यमप्रथमश्रुतिस्थो गः कैशिकिषड्जादिमश्रुतिस्थो निः चपरं शुद्धसरिमपधाः ॥ अस्मान्मेलात्तोडीप्रमुखा रागाः प्रादुर्भवन्ति ३५ द्विभेदेष्वेव चतुश्चत्वारिंशत्तमं ४४ नादरामक्रीमेलं लक्षयति—**नादादिमरामक्रीमेल इति** ॥ अस्मिन्साधारणः गान्धारो मध्यमैकश्रुतिस्थः चपरं मृदुसः ॥ षड्जतृतीयश्रुतिस्थो निः स्यात् ॥ सरिमपधा अपि शुद्धाः । अपिश्चार्थे ॥ अस्मान्मेलादित्येव ॥ एतन्मुखाः नादरामक्रीप्रमुखाः रागाः स्युरिति शेषः ॥ ३६ ॥

भैरवमेले शुद्धाः सरिमपधा अन्तरश्च कैशिकिनः ॥
भैरवपौरविकाद्या रागा मेलादतस्तु स्युः ॥ ३७ ॥

द्विभेदेष्वेव पञ्चाशत्तमं ५० भैरवमेलं लक्षयति—**भैरवमेल इति** ॥ अस्मिन्शुद्धाः सरिमपधाः गान्धारो मध्यमद्वितीयश्रुतिस्थः अन्तरः निषादः षड्जैकश्रुतिस्थः कैशिक श्च ५।१३ भैरवः पौरविका च आद्ये येषां ते रागाः अतस्तु स्युः ॥ ३७ ॥

शुद्धा वसन्तमेले सरिमपधा अन्तरश्च काकलिका ॥
अस्माद्वसन्तटक्कहिजेजाहिंदोलमुख्याश्च ॥ ३८ ॥
मेले वसन्तभैरविकायाः शुद्धाः सरिमपधा मृदुमः ॥
कैशिक्यपीयमस्मान्मारव्यथ मेलतोऽन्ये च ॥ ३९ ॥
मालवगौडकमेले सरिमपधा एव पञ्च शुद्धाः स्युः ॥
मृदुमध्यममृदुषड्जौ चास्मान्मेलाद्भवन्तीमे ॥ ४० ॥
मालवगौडो गौड्यौ पूर्वी पाहाडी च देवगान्धारः ॥
गौडक्रिया कुरंजी वहुली रामक्रिया चापि ॥ ४१ ॥

द्विभेदेष्वेव एकपञ्चाशत्तमं ५१ वसन्तमेलं लक्षयति—**शुद्धा वसन्तमेला इति** ॥ अस्मिन् सरिमपधाः शुद्धाः अन्तरः षड्जद्वितीयश्रुतिस्थो निषादः काकलिका च ५।१४ अस्मान्मेलादित्येव ॥ वसन्तटक्कहिजेजाः हिंदोलमुख्याः हिंदोलप्रभृतयश्च रागाः स्युरिति शेषः ॥ ३८ ॥ द्विभेदेष्वेव अष्टपञ्चाशत्तमं ५८ वसन्तभैरवीमेलं लक्षयति—**मेले वसन्तभैरविकाया इति** ॥ अस्मिन्शुद्धाः सरिमपधाः मृदुमः मध्यमतृतीयश्रुतिस्थो गः कैशिक्यपि ६।१३ अस्मान्मेलत इयं वसन्तभैरवी अथवा अन्ये च रागाः स्युरिति शेषः । अथ चार्थे ॥ ३९ ॥ द्विभेदेष्वेव षष्ठितमं मालवगौडमेलं लक्षयति—**मालवगौडकमेल इति** ॥ अस्मिन्सरिमपधा एव पञ्च शुद्धाः स्युः चपरं मृदुमध्यममृदुषड्जौ ६।१५ अस्मान्मेलादिमे वक्ष्यमाणा रागा भवन्ति ॥ ४० ॥ तानेव द्वाभ्यामाह—**मालवेति** ॥ मालवगौडः गौड्यौ गौ-

डीद्वयं शुद्धगौडी चैत्ती गौडी च ॥ पूर्वी पाहाडो देवगान्धारश्च ॥ गौडक्रिया कुरंजी बहुली रामक्रिया चापि ॥ चापीति निपातसमुदायश्चार्थे ॥ ४१ ॥

**पावक आसावरिका पञ्चमबंगालशुद्धललिताश्च ॥**
**गुर्जरिकापरजाख्यौ विशुद्धगौडादिकाश्चान्ये ॥ ४२ ॥**
**अथ रीतिगौडमेले पञ्च भवेयुः सरिगमपाः शुद्धाः ॥**
**तीव्रतरधकैशिकिनौ चैतत्प्रमुखा भवन्त्यस्मात् ॥ ४३ ॥**
**आभीरनाटमेले शुद्धसमपधाश्च तीव्रतरऋषभः ॥**
**साधारणमृदुसौ चेत्यतः स्युराभीरनाटाद्याः ॥ ४४ ॥**
**हम्मीरमेल उज्ज्वलसमपधतीव्रतररिमृदुममृदुसकाः ॥**
**हम्मीरविहंगडकेदारप्रमुखा अतो मेलात् ॥ ४५ ॥**

पावकः आसावरिका। पञ्चमश्च बङ्गालश्च शुद्धललिता च ताश्च गुर्जरिका च परजाख्यश्च तौ परज इति देशविशेषे नाम रागस्य॥ विशुद्धगौड आदिर्येषां ते तदादिका अन्ये च ॥ ४२ ॥ द्विभेदेष्वेव चतुरशीतितमं ८४ रीतिगौडमेलं लक्षयति—**अथ रीतिगौडमेल इति** अस्मिन्पञ्च सरिगमपाः शुद्धाः भवेयुः ॥ तीव्रतरधकैशिकिनौ च ११।१२ तीव्रतरधः शुद्धनिषादस्थो धः ॥ अस्मान्मेलादित्येव ॥ एतत्प्रमुखाः रीतिगौडादिरागा भवन्ति ॥ ४३ ॥ अथ त्रिभेदेषु एकषष्ठितमं ६१ आभीरनाटमेलं लक्षयति—**आभीरनाटेति** ॥ अस्मिन्शुद्धसमपधाः चपरं तीव्रतरऋषभः साधारणमृदुसौ च २।४।१९ इति अतः मेलादित्येव ॥ आभीरनाटाद्याः स्युः रागा इति शेषः ॥ ४४ ॥ त्रिभेदेष्वेव सप्तसप्ततितमं ७७ हम्मीरमेलं लक्षयति—**हम्मीरमेल इति** ॥ अस्मिन्नुज्वलाः शुद्धाः समपधाश्च तीव्रतररिमृदुममृदुसकाश्च २।६ १९ ते स्युरिति शेषः । अतो मेलात् हम्मीरश्च विहंगडश्च केदारश्च ते प्रमुखा येषां ते भवन्तीति शेषः ॥ ४५ ॥

**शुद्धवराटीमेले साधारणतीव्रतममृदुसाः स्युः ॥**
**शुच्यथसरिपधमस्माद्भवन्ति रागा वराट्याद्याः ॥ ४६ ॥**

शुचि रामक्रीमेले मृदुमकतीव्रतममृदुसाः शुद्धम् ॥
सारिपधामियमत्र ललिताजैताश्रीत्रावणीदेश्यः ॥ ४७ ॥
श्रीरागमेलकेरिस्तीव्रः साधारणोऽथ धस्तीव्रः ॥
कैशिक्यपि शुचिसमपा मालादस्माद्भवन्त्येते ॥ ४८ ॥

त्रिभेदेष्वेव पञ्चषष्ठ्युत्तरशततमं १६९ शुद्धवराटीमेलं लक्षयति—शुद्धावराटीमेले इति ॥ अस्मिन् साधारणतीव्रतममृदुसाः ४।८।१९ स्युः अथ सरिपधं शुचि शुद्धं स्यादिति शेषः ॥ अथ चार्थे ॥ अस्मान्मेलादित्येव वराट्याद्याः रागा भवन्ति ॥ सरिपधमिति समाहारद्वन्द्वः ॥ ४६ ॥ त्रिभेदेष्वेव सप्तोत्तरशतद्वयपूरणं २०७ देशकारमेलं लक्षयति—शुचिरामक्रीमेल इति ॥ अस्मिन् मृदुमकतीव्र-तगममृदुसाः मृदुसश्च ६।८।१९ सरिमपधं शुद्धं अत्रास्मिन्मेल इत्येव ॥ इयं शुद्धरामक्रीः ॥ ललितजैताश्रीत्रावणीदेश्यः । ललितो विभासभेदः । जैताश्रीः ॥ त्रावणी देशी च ॥ अन्येपि स्युरिति च शेषः ॥ ४७ ॥ अथ चतुर्भेदेषु त्रयोदशं १३ श्रीरागमेलं लक्षयति—श्रीरागमेलके इति ॥ अस्मिन् रिः तीव्रः तीव्रऋषभः ॥ अथ साधारणः तीव्रधः तीव्रधैवतः कैशिकी १।४।१०।१३ शुचिसमपा अपि शुद्धसमपाश्च ॥ अस्मान्मेलादेते भवन्ति ॥ ४८ ॥

श्रीरागमालवश्रीधन्याश्यो भैरवी तथा धवला ॥
सैंधव्याद्याश्चान्ये देशविशेषैर्विभिन्नाख्याः ॥ ४९ ॥
कल्याणस्य तु मेले शुचयः सपधारिरस्ति तीव्रतरः ॥
साधारणश्च मृदुपो मृदुसोस्मिन्नेष इतरे च ॥ ५० ॥
कांबोदमेलेति तीव्रतररिंतरकतीव्रतरधौ च ॥
काकलिका शुचिसमपा अतश्चकांबोददेवक्री ॥ ५१ ॥

तामेवाह—श्रीरागेति ॥ श्रीरागश्च मालवश्रीश्च धन्याशीच ताः ॥ तथा भैरवी ॥ धवला धवलधनाश्रीः सैंधवी सिंधोडा इति भाषायां ॥ तदा-

द्या अन्ये च ॥ कीदृशा एते ॥ अन्ये च ॥ देशविशेषैस्तत्तद्देशैर्हेतुभिर्विभिन्नाख्याः भिन्नभिन्ननामानः ॥ यथा धवलाया एव मेवाडा इति देशनाम ॥४९॥ चतुर्भेदेष्वेव चतुर्दशाधिकशतपूरणं ११४ कल्याणमेलं लक्षयति—**कल्याणस्य तु मेले** इति ॥ अस्मिंस्तु सपधाः शुचयः शुद्धाः रिः तीव्रतरः साधारणः मृदुपः मृदुसश्चास्ति २।४।९।१९ अस्मिन्मेल इत्येव ॥ एष कल्याणः इतरे अन्ये च रागाः स्युरिति च शेषः ॥ ५० ॥ चतुर्भेदेष्वेव चत्वारिंशदुत्तरशतपूरणं १४० कांबोदीमेलं लक्षयति—**कांबोदीमेल इति** ॥ अस्मिन् तीव्रतरारिः अंतरकतीव्रतरधौ काकलिका च २।५।११।१४ शुचिसमपाः शुद्धसमपाः स्युरिति शेषः ॥ अतः मेलादित्येव ॥ कांबोदश्च देवक्रीश्च तत्समाहारः कांबोददेवक्री ॥ पुंलिंगो प्याद्यः ॥ चादन्येऽपि स्युरित्येव ॥ ५१ ॥

**मल्लारिमेल उक्तास्तीव्रतररिमृदुमतीव्रतरधाश्च ॥**
**मृदुसः शुद्धाः समपा अस्मादेते तु मल्लारिः ॥ ५२ ॥**
**नटयुक्सपूर्वगौडो भूपालीगोंडशंकराभरणाः ॥**
**नटनारायणनारायणगौडौ कोपि केदारः ॥ ५३ ॥**
**सालंकनाटवेलावल्यावथ मध्यमादिरागश्च ॥**
**सावेरीसौराष्ट्री जायंतेऽन्येऽपि देशीस्थाः ॥ ५४ ॥**
**सामंतस्यहि मेले शुचिसमपास्तीव्रतमरिरंतरकः ॥**
**तीव्रतमधकाकल्यावस्मादेतन्मुखा रागाः ॥ ५५ ॥**

चतुर्भेदेष्वेव द्विषष्ट्यधिकशतपूरणं १६२ मल्लारिमेलं लक्षयति—**मल्लारिमेल उक्ता इति**॥ अस्मिन् तीव्रतररिमृदुमतीव्रतरधाः मृदुसः२।६।११।१९ शुद्धाः समपाश्चोक्ताः कथिताः अस्मान्मेलादित्येव ॥ एते तु जायन्ते इत्यग्रिमेण संबंधः॥ तानेवाह—**मल्लारिरिति** ॥५२॥ मल्लारिः सः मल्लारिः नटयुक् नटपूर्वयोगी ॥ नटमल्लारिश्चेत्यर्थः॥चार्थोऽत्र ज्ञेयः॥ पूर्वगौडः भूपाली च गोंडश्च शंकराभरणश्च ते नटनारायणश्च नारायणगौडश्च तौ कोपि केदारः हम्मीरमेलादन्यः केदारः॥सा-

ठंकनाटश्च वेलावली च ते ॥ अथ मध्यमादिरागः मध्यमादिनामा रागश्च सावेरी सौराष्ट्री अन्येपि देशीस्था जायन्ते ५३।५४ चतुर्भेदेष्वेव पञ्चचत्वारिंशदुत्तरशतद्वयपूरणं २४५ सामंतमेलं लक्षयति—**सामंतस्य हि मेल इति** ॥ अस्मिन् शुचिसमपाः शुद्धाः समपाः तीव्रतमरिः ॥ अंतरकः ॥ तीव्रतमधकाकल्यौ ३।५।१२।१४ अस्मान्मेलादित्येव ॥ एतन्मुखाः सामंतप्रमुखा रागा जायंन्त इत्येव ॥ ५५ ॥

> **कर्णाटगौडमेले शुचिसमपास्तीव्रतमरिमृदुमौ च ॥**
> **तीव्रधकैशिकिनौ स्युर्मेलादस्मादिमे रागाः ॥ ५६ ॥**
> **कर्णाटगौडकोड्वाणो नागध्वनिविशुद्धबंगालौ ॥**
> **वर्णादिनाट इतरे तुरुष्कतोड्यादिकाश्च स्युः ॥ ५७ ॥**

चतुर्भेदेष्वेव एकोनषष्ट्यधिकशतद्वयपूरणं २५९ कर्णाटमेलं लक्षयति—**कर्णाटगौडमेल इति** ॥ अस्मिन् शुचिसमपाः शुद्धाः समपाः तीव्रतमरिश्च मृदुमश्च तौ ॥ तीव्रधकैशिकिनौ च ३।६।१०।१३—**स्युरस्मान्मेलादिमे रागाः** स्युरिति अग्रिमेण संबंधः ॥ ५६ ॥ तानेवाह—**कर्णाटेति** ॥ कर्णाटगौडकः ॥ अड्वाणः । नागध्वनिश्च विशुद्धवंगालश्च तौ । वर्णादिनाटः वर्णनाटः तुरुष्कतोड्यादिकाः इतरे च ॥ इयं तुरुष्कतोडी इराखपर्यायतया कर्णाटगोडस्य समच्छायत्वेन परदा इति लोके ॥ तथाच कैश्चित् तत्तद्रागसमच्छायाः परदाख्या द्वादश रागा उच्यंते ॥ तोड्याः समृध्यया हुसेनी ॥ भरवस्यजुलुफः ॥ रामक्रियाया मुसली ॥ आसावर्या उज्ज्वलः ॥ विहंगडस्य नवरोजः ॥ देशकारस्य वाखरेजः । सैंधव्या हिजेजः । कल्याणयमनस्य पंचग्रहः ॥ देवक्र्याः पुष्कः ॥ वेलावल्याः सरपर्दः ॥ कर्णाटस्य इराखः ॥ अन्योपरागाणां सुगाद्गुगा इति ॥ ५७ ॥

> **देशाक्षीमेले शुचि समपास्तीव्रतमरिस्तथा मृदुमः ॥**
> **तीव्रतरधमृदुसावत एषान्ये चापि रागाः स्युः ॥ ५८ ॥**
> **मेले तु शुद्धनाट्याः शुचिसमपास्तीव्रतमरिमृदुमौ च ॥**

तीव्रतमधमृदुसमतो रागाः स्युः शुद्धनाटाद्याः ॥ ५९ ॥
सारंगरागमेळे तीव्रतररितीव्रतमगमृदुपाश्च ॥
तीव्रतमधमृदुसौ शुचि समपत एतन्मुखा रागाः ॥ ६० ॥

चतुर्भेदेष्वेव चतुःषष्ट्यधिकशतद्वयपूरणं २६४ देशाक्षीमेळं लक्षयति—देशाक्षीमेल इति॥ अस्मिन् शुचिसमपाः शुद्धाः समपाः तथा तीव्रतमरिः मृदुमः तीव्रतरधमृदुसौ ३।६।११।५ अतः अस्मान्मेलादित्येव एषा देशाक्षी अन्ये चापि रागाः स्युः ॥५८॥ चतुर्भेदेष्वेव सप्तषष्ट्यधिकशतद्वयपूरणं २६७ शुद्धनाटीमेळं लक्षयति—मेळेथ शुद्धनाट्या इति ॥ अस्मिन् शुचिसमपाः शुद्धाः समपाः तीव्रतमरिमृदुमौ तीव्रतमधमृदुसं च ३।६।१२।५ अतः मेळादित्येव शुद्धनाट आदिर्येषां ते रागाः स्युः ॥ पुंलिंगोयप्यं तीव्रतमधमृदुसमिति समाहारद्वंद्वः ॥ ५९ ॥ अथ पञ्चभेदेषु मेळेषु चतुश्चत्वारिंशदुत्तरशतपूरणं १४४ सारंगमेळे लक्षयति—सारंगरागमेळे इति ॥ अस्मिन् तीव्रतररिश्च तीव्रतमगश्च मृदुपश्च ते ॥ तीव्रतमधश्च मृदुसश्च तौ ॥ २।७।९ १२ १५ ॥ शुचि शुद्धं सपं । षड्जपंचमौ ॥ अतः मेळा दित्येव । एतन्मुखाः सारंगप्रमुखाः रागाः स्युरित्येव ॥ सपमिति समाहारद्वंद्वः ॥ ६० ॥

सकलकलेत्युपनामकसोमकविहिते हितेल्पबुद्धीनाम् ॥
मेळानां तु तृतीयो रागविबोधे विवेकोऽयम् ॥ १ ॥

सकलकलेति ॥ मेळानां तु विवेकस्तृतीयः॥ शेषं स्पष्टं ॥सकलकलेत्युपनामकमुद्गलसूरिसुतसोमनाथेन ॥ रागाविबोधविवेकस्तृतीय एवं मनाग्विवृतः ॥

श्रीसोमनाथविरचितः संगीतग्रन्थो

# रागविबोधः

स्वकृतटीकया समेतः ।

तत्र

## चतुर्थो विवेकः ।

घारपुरे इत्युपनामकेन गणेशशास्त्रिसूनुना पुरुषोत्तमेन

जगद्धितेच्छुनाम्नि मुद्रालये मुद्रापयित्वा

प्राकाश्यं नीतः ।

शके १८१७

मूल्यम्—चतुरानका आनकार्धश्च ।

प्रापणव्ययस्त्वानकार्धः ।

# रागविबोधे

## चतुर्थो विवेकः ।

—०—

अर्यासूनुसमानं प्रणम्य मानं धरासुरैः प्रवरैः ॥
झाम्पांबयातयालं मुद्गलमालंबदं कलये ॥
दक्षिणे लक्ष्मणो यस्य वामे च जानकात्मजा ॥
पुरतो मारुतिर्यस्य वंदे तं रघुनंदनम् ॥

**स्वरवर्णभूषितो यो ध्वनिभेदो रंजकः स राग इह ॥**
**वहुविधसंख्याः प्राचां मतैरनेकैः प्रसिद्धा ये ॥ १ ॥**
**देशजनुषोऽप्रसिद्धास्तेऽब्धितरंगा इव त्वसंख्याताः ॥**
**शुद्धच्छायालगसंकीर्णतया त्रिविधताऽस्त्येषाम् ॥ २ ॥**

एवं मेलनिरूपणप्रसंगेनोद्दिष्टात्रागान्यथोद्देशं लिलक्षयिषुस्तावद्रागसामान्यलक्षणमाह—**स्वरवर्णभूषित** इति। यो रंजको रंजनकारी ध्वनिभेदो ध्वनिविशेषः स रागः । स्वरेऽतिव्याप्तिनिवारणाय विशेषणं स्वरवर्णभूषित इति। स्वराणां वर्णा ग्रहांशन्यासादियुक्ता गानक्रिया तया भूषितः । तथा च **मतंगः**—" यो-

ऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः।रंजको जनचित्तानां स रागः कथितो बुधैः " इति । स एव रागशब्दस्य रूढत्वयौगिकत्वयोगरूढत्वैः प्रयोगमप्याह—' अश्वकर्णादिवद्रूढो यौगिको वाऽपि मन्थवत् । योगरूढश्च वा रागो ज्ञेयः पंकजशब्दवत्''इति। तत्र रागशब्दस्य केवलं रूढत्वं तु क्वचिदरंजकत्वेऽपि ज्ञेयम् " अयं तु रागो मह्यं न रोचते " इति वाक्यप्रयोगे । तत्र प्रसिद्धरागेष्वनेकमतैः संख्यावैलक्षण्यमाह—**इहेति** । इह एषु रागेषु ये प्रसिद्धाः पूर्वकाल इदानीं च प्रसिद्धिर्मतस्ते इत्यर्थात्प्राचां प्राचीनानामनेकैर्मतैर्बहुविधसंख्याः । तद्यथा । **निःशंकमते** तु दशविधाश्चतुःषष्ट्यधिकशतद्वयम् २६४ । रागास्तत्र त्रिंशत् ३० । ग्रामरागा अष्ट ८ । उपरागा विंशतिः २० । रागाः षण्णवतिः ९६ भाषाः । विंशतिर्२०विभाषाः । चतस्र आंतरभाषाः । एकविंशती रागांगानि । विंशतिर्भाषांगानि । पंचदश क्रियांगानि । त्रिंशदुपांगानि । तथाच **निशंकः**—"सर्वेषामिति रागाणां मिलितानां शतद्वयम् । चतुःषष्ट्यधिकं ब्रूते शार्ङ्गः श्रीकरणाग्रणीः " इति । **रागार्णवमते** तु—" षड्विंशत् प्रवर्तकरागाः । तत्र **भैरवपंचमनट्टमल्लारिमालवगौडदेशांगा**श्चेति षड्रागाः एकैकाश्रितास्तु वंगपालादिललितादिप्रमुखाः पंच पंचेति त्रिंशत् । तथाच—" भैरवः पंचमो नट्टो मल्लारो गौडमालवः । देशांगश्चेति षड्रागाः प्रोच्यंते लोकविश्रुताः ॥ वंगपालो गुणकरी मध्यमादिर्वसंतकः । धनाश्रीश्चेति पंचैते रागा भैरवसंश्रयाः " इत्यादि ॥ केषांचिन्मते तु षट्षष्टी रागाः । तत्र शुद्धभैरवादयः षट् पुरुषास्तेषां प्रत्येकं पंच पंच योषितः पंच पंच पुत्राश्च । तथाच—" रागाः षट् पुरुषास्तेषां पंच पंच तु योषितः । सूनवः पंच पंचैव षट्षष्टिरिति तेऽखिलाः " इत्यादि । अपरेषां तु मतेऽष्टचत्वारिंशत्प्रसिद्धरागाः तथाच " श्रीरागाद्याः षण्नराः षट्तद्भार्या मालतीमुखाः । षट् षट् तत्पुत्रकाः सर्वे चत्वारिंशत् तथाऽष्ट च । श्रीरागात् षट् तु मालत्यां गौडी कोलाहली तथा । आंधाली देवगांधारी द्राविडी मालकौशिकी । वसंतात् षड्जयत्यां तु गोंडक्री देवशाखिका ॥ वराटिका धनाश्री च रामक्री पटमंजरी । पंचमाद्देशिकायां षट् शुद्धटी पाहाडिका(?)॥त्रोटकी मोटकी सिंधुस्ततो म-

ह्लारिकेति च ॥ भैरवात्षट् सुपर्ण्यो स्युर्भैरवी गुर्जरी तथा। वेलावली च कर्णा-टी ललिता रक्तहंसिका ॥ मेघरागाज्जातिकायां षट् कामोदाऽथ सोरटी ॥ कंसालिका च बंगाली भूपाली मधुकर्यपि ॥ नटनारायणात्षट् तु कमलायां विहंगडा ॥ गांधारी वल्लभा वंशवेणुस्त्रावण्यसावरी " इति ॥ एवमादिमतैः रागसंख्या अनेकाः । तत्तद्देशजातानामप्रसिद्धरागाणां त्वसंख्यता माह—**देशजनुष इति** ॥ देशे जनुर्जन्म एषां ते अत एव प्रसिद्धाः अन्य देशेष्वविख्यातास्ते रागास्त्वब्धितरंगा इव समुद्रलहरीवदसंख्याताः । तु शब्दोभिन्नक्रमः ॥ यथाऽऽह **मतंगः**—देशजानां रागाणामानंत्यादनिबद्धत्वाच्च संख्या नास्तीति मंतव्यम्—" इति ॥ **रागार्णवेऽपि**—" न रागाणां न तालानामंतः कुत्रापि विद्यते—" इति । इदानीमुमापत्युक्तं यथायोग्यं रागाणां त्रैविध्यमाह—**शुद्धच्छायालगसंकीर्णतयेति** । शुद्धतया छायालगतया संकीर्णतया च एषां रागाणां त्रिविधताऽस्ति ॥ १ ॥ २ ॥

**शुद्धो रंजनकारी स्वेन च्छायालगः पराश्रयतः ॥**
**संकीर्णस्तूभयथा मतमुदितमुमापतेरेवम् ॥ ३ ॥**

यथोद्देशं लक्षयति—**शुद्धो रंजनेति**। अत्र सर्वत्र यत्तदोरध्याहारः । यः । स्वेन स्वत एव रंजनकारी न तु परछायाश्रयणेन स शुद्धः । यः पराश्रयतोऽन्यरागाश्रयणेन रंजनकारीत्येव स च्छायालगः । यस्तूभयथा शुद्धच्छाया-लगत्वमिश्रणेन रंजनकारी त्येव स संकीर्णः एवमुमापतेः शंकरस्य मतमुदितमुक्तम् ॥ तथा चोक्तमु**मापतिना**—" मयैव पंचभिर्वक्त्रैः सृष्टाः पूर्वं कुतूहलात् । अतः संभूय शुद्धास्ते षट् त्रिंशत्संख्ययोदिताः ॥ एतेषां छायया जाताश्छायालगसमाह्वयाः । असंख्यातास्तु ते तेषु शतमेकोत्तरं क्रमात् ॥ शुद्धं तु शिवरूपेण शक्तिरूपेण शालगम् । द्वयोर्मिश्रं तु संकीर्णमतस्ते त्रिविधा मताः " इति ॥ ३ ॥

**येऽत्रालापालप्तिप्रबंधयोग्यास्त उत्तमाः कथिताः ॥**
**अपि तादृक्षा येऽल्पप्रचारिणो मध्यमास्ते स्युः ॥**

अपि बहुतरप्रचारास्तदयोग्यास्तेऽधमा इति त्वन्ये ॥ ४ ॥

रागाणां तूत्तममध्यमाधमत्वरूपं प्रकारान्तरेणापि त्रिविधतां मतांतरेणाऽऽह सार्धयाऽऽर्यया॥तत्रोत्तमाँल्लक्षयति—येऽत्रालापेति। अत्र येषु रागेषु य आलापश्च आलप्तिश्च प्रबंधो वस्तुसंज्ञश्च तद्योग्यास्ते उत्तमाः कथिताः। तत्राऽऽलापो नाम यत्र ग्रहांशन्यासापन्यासानां मंद्रतारयोश्च स्वराल्पत्वस्य स्वरबहुत्वस्य च खाडवौडवयोरपि अभिव्यक्तिर्भवति सः । तथा च निःशंकः—"ग्रहांशतारमंद्राणां न्यासापन्यासयोस्तथा । अल्पत्वस्य बहुत्वस्य खाडवौडवयोरपि ॥ अभिव्यक्तिर्यत्र दृष्टा स रागालाप उच्यते " इति ॥ आलप्तिर्यत्र चत्वारि स्वस्थानानि भवंति सा । तानि यथा यत्र गीतं स्थाप्यते स स्वरः स्थायी । ततः स्थायिन आरोहेण चतुर्थस्वरो व्द्यर्धसंज्ञः । तस्मात् व्द्यर्धात् स्वरादधस्तनेषु तृतीयस्वरादिषु तत्तद्रागोचितस्फुरितकंपितादिगमकयुक्तत्वेन वादनं पुनः पुनरुच्चारणं वा मुखचालसंज्ञकम् । तत्र स्थायिनमारभ्य द्व्यर्धस्वरं मर्यादीकृत्य तदधस्तनाद्यथोचितं चालयित्वा स्थायिनि न्यासे कृते प्रथमं स्वस्थानम् ॥ पूर्वोक्तव्द्यर्धस्वरेण सह पूर्ववत् वादनमुच्चारणं वा तत्पूर्ववत्कृत्वा तत्रैव स्थायिनि न्यासेन स्वस्थानसमाप्तिर्द्वितीयं स्वस्थानम् ॥ स्थायिनः स्वरादष्टमः स्वरो द्विगुणसंज्ञश्चतुर्थस्तु द्व्यर्धः तयोश्चतुर्थाष्टमयोर्मध्ये स्थिताः स्वराः पंचमषष्ठसप्तमा अर्धस्थितसंज्ञास्तेषु पूर्ववत् वादनं पुनःपुनरुच्चारणं वा कृत्वा स्थायिन्येव न्यसनेन स्वस्थानसमाप्तिः तृतीयं स्वस्थानं । द्विगुणसंज्ञकेऽष्टमस्वरे तदुत्तरतदुत्तरस्वरेषु च पूर्ववद्वादनं पुनः पुनरुच्चारणं वा कृत्वा स्थायिन्यालप्तिसमाप्तिश्चतुर्थस्वस्थानम् । तथाच स एव—" रागालपनमालप्तिः प्रकटीकरणं मतम् । स्वस्थानैः सा चतुर्भिः स्यात्स्वरे तस्मादधस्तने॥ चालनं मुखचालः स्यात्स्वस्थानं प्रथमं भवेत् । द्व्यर्धस्वरे चालयित्वा न्यसनं तद्द्वितीयकम्॥ स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः।व्द्यर्धद्विगुणयोर्मध्ये स्थिता अर्धस्थिताः स्वराः ॥ अर्धस्थिते चालयित्वा न्यसनं तत्तृतीयकम् । द्विगुणे चालयित्वा तु स्थायिन्यासाच्चतुर्थकम् " इति ॥ प्रबंधो नाम उद्ग्राह-

मेलापकध्रुवाभोगाख्यैः चतुर्भिर्धातुभिः तथा स्वराक्षरैः बिरुदैः तेऽनेन शब्देन पाटैस्तालैश्च षड्भिरंगैरुपलक्षितो ग्रथनाविशेषः । तथाच पार्श्वदेवः—" चतुर्भिर्धातुभिः षड्भिश्चांगैर्यस्मात्प्रबध्यते । तस्मात्प्रबंधः कथितो गीतलक्षणकोविदैः ॥ उद्ग्रहाद्यास्तु चत्वारः स्वरादीनि च षट् तथा । वसंति यत्र स ज्ञेयः प्रबंधो वस्तुसंज्ञया " इति ॥ निःशंकोऽपि—" प्रबंधावयवो धातुः स चतुर्धा निरूपितः। उद्ग्राहः प्रथमस्तत्र ततो मेलापकध्रुवौ॥ आभोगश्चेति" इति ॥ " अंगानि षड्भवंत्यस्य स्वरस्तु बिरुदं पदम् । तेनैकः पाटतालौ च" इति ॥ ते च उत्तमरागाः—मुखारी । शुद्धनाटी । मालवगौडः । शुद्धवराटी । गुर्जरी । ललितः । शुद्ध रामक्रिया । शुद्धवसंतः । भैरवी । हिंदोलः । श्रीरागः । कर्णाटगौडः । सायंतः । देशाक्षी । धन्याशी । बहुली । आभिरी । मल्लारी । मालवश्रीः । सालंकनाटी एवमाद्यः ॥ मध्यमाँल्लक्षयति–अपि तादृक्षा इति । ये तादृक्षा अपि आलापालप्तिप्रबंधयोग्या अपि संतोऽल्पप्रचारिणो लोकेऽबहुव्यवहारास्ते मध्यमाः स्युः ते च मध्यमरागाः—केदारगौडः । कांबोदी । बंगालः । वेलावली । मध्यमादिः । नारायणी । रीतिगौडः । नादरामक्रिया । पाहाडी । भूपाली । रेवगुप्तिः । गुंडक्रिया । हिजेजः । वसंतभैरवी । सामवराली—चेत्यादयः ॥ अधमाँल्लक्षयति–अपि बहुतरेति । ये इत्यर्थात् ये बहुतरप्रचारा अपि तदयोग्यास्तेषामालापादीनामयोग्यास्तेऽधमाः स्युरित्येव । ते च अधमरागाः—सौराष्ट्री । मेघबहुली । छायागौडः । कुरंजी । सैंधवी । रामक्रिया । गौडी । देशी । मंगलकौशिकः । पूर्वी । सोमरागः । अंधाली । फलमंजरी । शंकराभरणः । देवगांधारः । दीपकः । नटनारायणः । भिन्नषड्जः । कुंतलवराटी । सालगभैरवी । शुद्धबंगालः । नागध्वनिः । घंटारवः । मार्गीहिंदोलः । छायानाटी । देवक्रिया । गौडरागः । तोडी । वराली । तुरुष्कतोडी । सावेरी । प्रमुखाः ॥ मतांतरं निगमयति–अन्ये केचनेति । मन्यंत इति शेषः ॥ ४ ॥

यद्यपि देशीरागा देशेदेशेऽन्यवेलाख्याः ॥ ५ ॥

पूर्णौडवखाडवता स्वंशन्यासग्रहेषु चानियताः ॥
तदपि ग्रहादि पूर्णत्वादि च बहुमतजमनुसृत्य ॥ ६ ॥
मेले प्रसंगत इहोद्दिष्टानां लक्षणं ससंक्षेपम् ॥
तेषां पूर्वं वक्ष्यामि गानवेलासमायुक्तम् ॥ ७ ॥

एवं रागसामान्यलक्षणं मतांतरैस्तत्संख्याविशेषं चोक्त्वा मेलप्रसंगोद्दिष्टानां रागविशेषाणां लक्षणानि गानकालांश्चोद्दिष्टक्रमेण वक्तुं प्रतिजानाति सार्धेनाऽऽर्याद्वयेन–यद्यपीति । देशी रागा देशे देशेऽन्या । भिन्नभिन्ना वेला गायनकाला आख्या नामानि च येषां ते तथोक्ताः तथा पूर्णौडवखाडवतासु सप्तस्वरात्मकत्वे पंचस्वरात्मकत्वे षट्स्वरात्मकत्वे च नियता व्यभिचारिणः । तथांऽशन्यासग्रहेषु च । अंशः प्रयोगे बहुलः स्वरः । न्यासः गीतिसमाप्तिविधायी स्वरः । ग्रहो गीतादिस्थः स्वरः तेषु चानियता इत्येव । यद्यप्येवं यदपि बहुमतजं नानाशास्त्रकारमतप्रतिपादितं ग्रहादि ग्रहांशन्यासान् पूर्णत्वादि च संपूर्णत्वौडवत्वखाडवत्वानि चानुसृत्य प्रमाणीकृत्य इह ग्रंथे मेलप्रसंगत उद्दिष्टानां तेषां मुखार्यादिकरागविशेषाणां लक्षणपूर्वं प्रथमं ससंक्षेपमविस्तरं वक्ष्यामि कथयिष्यामि । उद्देशक्रमेणेति शेषः ॥ कीदृग्लक्षणं गानवेलासमायुक्तं तेषां गानकालांश्च वक्ष्य इत्यर्थः ॥ क्रियाविशेषणं वा एतत् ॥ देशीरागा यद्यपि तत्तद्देशेषु भिन्नभिन्नस्वरूपा भिन्नभिन्ननामानो भिन्नगानकालाश्च संति तथाऽपि बहुमतेषु प्रसिद्धानि लक्षणान्यनुसृत्य, प्रथमं तान् संक्षिप्य लक्षयिष्यामि पश्चात्तु लक्ष्यप्रसिद्धिमनुसृत्य विस्तरं पंचमाविवेके लक्षयिष्यामीति सार्धार्याद्वयस्यार्थः ॥ ५ ॥ ६ ॥ ७ ॥

पूर्णा नित्यं गेया सांशन्यासग्रहा मुखारीयम् ॥
पूर्णा तुरुष्कतोडी गांशादिः संगवे कंप्रा ॥ ८ ॥

तत्र मेलोद्देशक्रमेण मुखारीप्रभृतीन् सारंगांतान् पंचसप्तति७५संख्यान् रागान् संक्षिप्य लक्षयति तत्तद्गानकालांश्च कथयति सार्धाष्टात्रिंश-

द्भिरार्याभिः ॥ मुखारी इयं पूर्णा सप्तस्वरात्मिका सः षड्ज एवांशः बहुलप्रयोगो न्यासः समाप्तिविधायी ग्रह आदिस्थो यस्याः सा । नित्यं गेया सर्वदा गातव्या । इयं स्वमेले ॥ तुरुष्कतोडी पूर्णा गः गांधारः एव अंशादयः अंशन्यासग्रहा यस्याः सा ।। कंप्रा स्वरसप्तकेऽपि कंपनशीला । संगवे पंचधाविभक्तदिनस्य द्वितीयविभागे गेयेति शेषः । इयं मुखारीमेले तोडीमेले वा ॥ ८ ॥

**असपा तु रेवगुप्ती रिन्यासांशग्रहा भवेत्सायम् ॥**
**सततं सामवराली सांशन्यासग्रहा पूर्णा ॥ ९ ॥**

रेवगुप्तिस्तु असपा षड्जपंचमहीना रिः ऋषभः एव न्यासः अंशो ग्रहश्च यस्याः सा सायं भवेत् गेयेति शेषः । इयं स्वमेले ॥ सामवराली सांशन्यासग्रहा षड्जग्रहांशन्यासा पूर्णा सततं नित्यं गेयेति शेषः । इयमपि स्वमेले॥९॥

**गांशग्रहा किल वसंतवराली सर्वदाऽरिपा सांता ॥**
**गाद्यंशसांतपूर्णा तोडी कंप्राणु संगवरुक् ॥ १० ॥**

वसंत वराडी । किल प्रसिद्धौ । गांशग्रहा गांधारग्रहांशा । आरिपा ऋषभपंचमहीना । सांता षड्जन्यासा । सर्वदा गेयेति शेषः । इयं सामवराडी मेले ॥ तोडी गाद्यंशसांतपूर्णा गः गांधारः आदिर्ग्रहः अंशश्च यस्याः सा चासौ स षड्जः अंतो न्यासश्च यस्याः सा चासौ पूर्णा च । अणु अल्पं यथा स्यात् तथा कंपनशीला । गांधारमध्यमयोरित्यर्थः । संभवे रुक् शोभा यस्याः सा । इयं स्वमेले ॥ १० ॥

**सांशन्यासग्रहका पूर्णोल्लसति निशि नादरामक्रीः ॥**
**धांशग्रहसंन्यासः संपूर्णो भैरवः प्रातः ॥ ११ ॥**

नादरामक्रीः पूर्णा सांशन्यासग्रहका षड्जांशन्यासग्रहा निशि उल्लसति

गाने शोभते । इयं स्वमेले ॥ भैरवः धांशग्रहः धैवतांशग्रहः स चासौ सन्यासः षड्जन्यासश्च । संपूर्णः प्रातः पंचधाविभक्तस्याह्न आद्यभागे गेय इति शेषः। अयं स्वमेले ॥ ११ ॥

**सन्यासग्रहमांशा स्वल्परिपा पौरवी लसेत्प्रातः ॥**
**सांशन्यासग्रहको वसंत उषासि विलसेत्पूर्णः ॥ १२ ॥**

पौरवी स्वल्परिपा अल्पप्रयोज्य ऋषभपंचमा । सन्यासग्रहा षड्जग्रहन्यासा सा चासौ मांशा मध्यमांशा च प्रातः पूर्वोक्तकाले लसेत् शोभेत गाने इति शेषः ॥ इयं भैरवी मेले ॥ वसंतः पूर्णः सांशन्यासग्रहकः षड्जग्रहांशन्यासः । उषसि प्रभाते विलसेच्छोभेत् । गाने इति शेषः ॥ अयं स्वमेले ॥ १२ ॥

**गेयः पूर्णष्टक्कः सांशन्यासग्रहो दिनस्यांते ॥**
**मांशग्रहः सन्यासोऽखिलो हिजेजस्तु सायान्हे ॥ १३ ॥**

टक्कः पूर्णः सांशन्यासग्रहः षड्जग्रहांशन्यासः दिनस्यांते दिनस्य पंचमे भागे गेयः । अयं वसंतमेले ॥ हिजेजस्त्वखिलः पूर्णः मांशग्रहः मध्यमग्रहांशः स चासौ सन्यासः षड्जन्यासश्च सायाह्ने गेय इति शेषः ॥ अयमपि वसंतमेले ॥ १३ ॥

**हिंदोलो रिपहीनो मांशः सांतग्रहः सदोषसि वा ॥**
**पोना वसंत भैरव्युषसि तु सांशग्रहन्यासा ॥ १४ ॥**

हिंदोलो रिपहीनो ऋषभपंचमत्यागी । मांशः मध्यमांशः । सांतग्रहः षड्जग्रहन्यासः । सदा नित्यं उषसि प्रातःकाले वा गेय इति शेषः ॥ अयमपि वसंतमेले ॥ वसंतभैरवीतु पोना पंचमहीना सांशग्रहन्यासा षड्जग्रहांशन्यासा उषसि गेया । इयं स्वमेले ॥ १४ ॥

**रिधहीना शाश्वतिकी सांता गांशग्रहा तु मारविका ॥**
**मालवगौडः पूर्णः प्रदोषशोभोऽथवा रहितः ॥**
**गांधारधैवताभ्यां निन्यासांशग्रहोऽथवा सांतः ॥ १५ ॥**

मारविका । मारू इति लोके । सांता षड्जन्यासा गांशग्रहा गांधारग्रहांशा । शाश्वतिकी शश्वत्सर्वदा भवा नित्यं गेयेत्यर्थः । इयं वसंतभैरवीमेले ॥ शाश्वतिकीति येषां च विरोधः शाश्वतिक इति संज्ञापकात् टिलोपाभावः । उजत्वात् ङीप् ॥ मालवगौडः पूर्णोऽथवा गांधारधैवताभ्यां रहितो निन्यासांशग्रहः निशादग्रहांशन्यासः । अथवा सांतः षड्जन्यासः प्रदोषे त्रिमुहूर्तात्मके रजनीमुखे शोभा यस्य तत्र गेय इत्यर्थः । अयं स्वमेले ॥ १५ ॥

**गौड्यधगा सायान्हे न्यंशा चैतीच सांतादिः ॥ १६ ॥**

गौडी चैती चाधगा गांधारधैवतरहितान्यंशा ऋषभांशा सांतादिः षड्जग्रहन्यासा अनयोरंशस्य ग्रहत्वमपि क्वचित् । सायान्हे गेयेति शेषः । अत्र केषांचित्तुल्यमेलग्रहांशन्यासत्वेऽपि स्वरूपभेदो वक्ष्यमाणवादनविशेषादिति ग्रंथकृत्स्वयमेवाग्रे कथयिष्यति इमे मालवगौडमेले ॥ १६ ॥

**पूर्वी पूर्णा सांता गांशाषड्जग्रहा च सायाह्ने ॥**
**पाडी सायाह्नार्हा गोना सांशग्रहन्यासा ॥ १७ ॥**

पूर्वी पूर्णा गांशा गांधारांशा सांता षड्जन्यासा षड्जग्रहा च सायाह्ने गेयेति शेषः । इयमपि मालवगौडमेले । पाहाडी गोना गांधारहीना सांशग्रहन्यासा षड्जांशग्रहन्यासा सायाह्नार्हा गायन इति शेषः ॥ इयमपि मालवगौडमेले एव ॥ १७ ॥

**रिग्रहपांशः सांतः सदाऽगनिर्देवगांधारः ।**
**गौडक्रिया धरिक्ता सांशन्यासग्रहा प्रातः ॥ १८ ॥**

देवगांधारोऽगनिर्गांधारनिषादहीनः । रिग्रहो ऋषभग्रहश्चासौ पांशः पंचमांशश्च सांतः षड्जन्यासः सदा सर्वदा गेय इति शेषः । मालवगौडमेल एव । गौडक्रिया धरिक्ता धैवतरहितासांशन्यासग्रहा षड्जग्रहांशन्यासा प्रातर्गेय इति शेषः । मालवगौडमेल एव ॥ १८ ॥

**गेया सदा कुरंजी धाल्पा सांशग्रहा च सन्यासा ॥**
**अमनिरपराह्णगेया सांशन्यासग्रहा वहुली ॥ १९ ॥**

कुरंजी सांशग्रहा षड्जग्रहांशा सन्यासा षड्जन्यासा च धाल्पा अल्पधैवता न तु गौडक्रियावत् सर्वथा धैवतहीना सदा गेया । इयमपि मालवगौडमेले ॥ वहुली अमनिर्मध्यमनिषादहीना सांशन्यासग्रहा षड्जग्रहांशन्यासाऽपराह्णे गेया पंचधाविभक्तस्य दिनस्य चतुर्थभागे गातव्या । मालवगौडमेल एव ॥ १९ ॥

**संपूर्णा रामक्रीः सांशांतादिः सदाऽपि गांशाद्या ॥**
**गाद्यो धांशः सांतो निविरहितः पावकः शश्वत् ॥ २० ॥**

रामक्रीः संपूर्णा सांशांतादिः षड्जग्रहांशन्यासा । गांशाद्यापि । अपि शब्दो विकल्पे । गांधारग्रहांशा वेत्यर्थः । सदा सर्वदा गेयेति शेषः । मालवगौडमेल एव ॥ पावको निविरहितो निषादहीनो गाद्यो गांधारग्रहो धांशो धैवतांशः सांतः षड्जन्यासः शश्वत्सर्वदा गेय इति शेषः मालवगौडमेल एव ॥ २० ॥

**आसावरी प्रगेया माधांशा सांतिमा सदा पूर्णा ॥**
**पंचमऋषभविहीनः पांशन्यासग्रहो ह्युषसि ॥ २१ ॥**

आसावरी पूर्णा माद्यांशा मध्यमग्रहांशा सः षड्जः अंतिमो न्यासो यस्याः सा सदा प्रगेया प्रगातव्या । मालवगौडमेल एव ॥ पंचमः पंचमरागो

ऋषभविहीनः पांशन्यासग्रहः पंचमग्रहांशन्यास उषसिहि विभाते गेय इति शेषः। मालवगौडमेल एव ॥ २१ ॥

**बंगालः शाश्वतिकः पूर्णः सांशग्रहश्च सन्यासः ॥**
**उषसि तु पूर्णाऽपा वा सांशांत्याद्या शुचिर्ललिता ॥ २२ ॥**

बंगालः पूर्णः सांशग्रहः षड्जग्रहांशः सन्यासः षड्जन्यासश्च शाश्वतिकः निरंतरगेयः। मालवगौडमेल एव ॥ शुचिः शुद्धा ललिता पूर्णाऽपा पंचमरहिता वा सांशांत्याद्या षड्जग्रहांशन्यासा उषसि तु प्रभात एव गेया इति शेषः। मालवगौडमेल एव ॥ २२ ॥

**गुर्जरिका रिन्यासग्रहांशका पवियुता प्रभातार्हा ॥**
**परजो न्यल्पो गांशग्रहधगकंप्रः सदा सांतः ॥ २३ ॥**

गुर्जरिका पवियुता पंचमरहिता रिन्यासग्रहांशका ऋषभग्रहांशन्यासा प्रभातार्हा प्रभाते गानयोग्या। मालवगौडमेल एव ॥ परजः न्यल्पः अल्पनिषादः गांशग्रहः गांधारग्रहांशश्चासौ धगकंप्रश्च धैवतगांधारयोः कंपनशीलश्च सांतः षड्जन्यासः सदा गेय इति शेषः। मालवगौडमेल एव ॥२३॥

**न्यल्पः प्रदोषशाली शुचिगौडः पांशसादिसन्यासः ॥**
**पूर्णस्तु रीतिगौडो न्यंशांत्यादिश्च सायान्हे ॥ २४ ॥**

शुचिगौडः शुद्धगौडः न्यल्पः अल्पनिषादः पांशः पंचमांशश्चासौ सादिः षड्जग्रहश्च स चासौ सन्यासः षड्जन्यासश्च प्रदोषशाली रात्रिमुखे गेय इत्यर्थः। मालवगौडमेल एव ॥ रीतिगौडस्तु पूर्णः न्यंशांत्यादिश्च निषादग्रहांशन्यासश्च सायान्हे गेय इति शेषः। स्वस्यैव मेले ॥ २५ ॥

**आभिर्यपि प्रदोषे पूर्णा गांशग्रहा च सन्यासा ॥**
**गग्रहपांशः सन्यासो हम्मीरोऽल्पनी रात्रौ ॥ २५ ॥**

आभिरी पूर्णा गांशग्रहा गांधारग्रहांशा सन्यासा षड्जन्यासा च प्रदोषेऽपि अपिश्चार्थे । गेया इति शेषः । इयं स्वमेले ॥ हम्मीरः अल्पनिः निषादाल्पः ग्रहः गांधारग्रहश्चासौ पांशः पंचमांशश्च सन्यासः षड्जन्यासः रात्रौ गेयः । अयं स्वमेले ॥ २५ ॥

न्यंशग्रहसन्यासोऽल्पधो लसेन्निशि विहंगडः ॥
केदारोऽल्परिधो निशि सन्यासो गांशगग्रहकः ॥ २६ ॥

विहंगडः अल्पः धः धैवतो यस्मिन् सः न्यंशग्रहः निषादग्रहांशश्चासौ सन्यासः षड्जन्यासश्च यः कंप्रः स्वरेषु कंपनशीलः निशि लसेत् रात्रौ शोभते । अयं हम्मीर मेले ॥ केदारः अल्पौ रिधौ ऋषभधैवतौ यस्मिन् सः गांशः गांधारांशश्चासौ गग्रहकः गांधारग्रहश्च सन्यासः षड्जन्यासः निशि रात्रौ गेयः । अयमपि हम्मीरमेले ॥ २६ ॥

शुद्धवराटी पूर्णा सांशांता रिग्रहा च मध्यान्हे ॥
सांशाद्यंतोऽन्हॊन्तः कंप्रमनिर्देशकृत्पूर्णः ॥ २७ ॥

शुद्धवराटी पूर्णा सांशान्ता षड्जांशन्यासा रिग्रहा ऋषभग्रहा च मध्यान्हे पंचधाविभक्तदिवसस्य तृतीयभागे गेया इति शेषः । इयं स्वमेले देशकदेशकारः शुद्धरामक्रीरिति यावत् । सः पूर्णः सांशाद्यंतः षड्जग्रहांशन्यासः कंप्रौ कंपनशीलौ मनी मध्यमनिषादौ यस्मिन् सः अन्हः अंतर्मध्ये मध्याह्न इति यावत् गेय इति । अयं स्वमेले ॥ २७ ॥

ललित उषसि संपूर्णो धांशः सांतग्रहः पहीनो वा ॥
सन्यासग्रहगांशाल्परिधा प्रातस्तु जैताश्रीः ॥ २८ ॥

ललितः विभासललितः संपूर्णः पहीनो वा केषांचिन्मते पंचमोनः धांशः धैवतांशः सांतग्रहः षड्जग्रहन्यासः उषसि गेय इति शेषः । अयं देशः

कारमेले ॥ जैताश्रीस्तु अल्पौ रिधौ ऋषभधैवतौ यस्यां सा सन्यासग्रहा षड्जग्रहन्यासा चासौगांशा गांधारांशा च प्रातः गेया इति शेषः । इयमपि देशकारमेले ॥ २८ ॥

सन्यासरिग्रहांशा संपूर्णा त्रावणी तु सायान्हे ॥
रिग्रहरिन्यासांशा गाल्पा देशी सदा गेया ॥ २९ ॥

त्रावणी तु संपूर्णा सन्यासा षड्जन्यासा चासौ रिग्रहांशा च ऋषभग्रहांशा च सायान्हे गेया इति शेषः । इयमपि देशकारमेले ॥ देशी गाल्पा गांधारदुर्बला रिग्रहा ऋषभग्रहा चासौ रिन्यासांशा ऋषभांशन्यासा च सा सदा गेया । देशकारमेल एव ॥ २९ ॥

न्यंशग्रहा प्रदोषे श्रीरागो गतधगो न वा सांतः ॥
सग्रहसांशन्यासा मालश्रीर्निग्रहांशा वा ॥
पूर्णाऽथवा रिधाल्पा गेयाऽदौ मंगलाय शाश्वतिकी ॥ ३० ॥

श्रीरागः गतौ गांधारधैवतौ यस्मात्सः । वा अथवा न गतधग इत्येव । पूर्ण इत्यर्थः । न्यंशग्रहः ऋषभग्रहांशः सांतः षड्जन्यासः प्रदोषे गेय इति शेषः । अयं स्वमेले ॥ मालश्रीः पूर्णाऽथवा रीधाल्पा ऋषभधैवतदुर्बला सग्रहा षड्जग्रहा चासौ सांशन्यासा षड्जांशन्यासा च सा । वा अथवा निग्रहांशा निषादग्रहांशा मंगलाय शुभार्थं आदौ गीतारम्भे गेया शाश्वतिकी सदा गातव्या । इयं श्रीरागमेले ॥ ३० ॥

धन्याशिका रिधोना सांशन्यासग्रहा प्रातः ॥ ३१ ॥

धन्याशिका धनाश्रीः रिधोना ऋषभधैवतदुर्बला सांशन्यासग्रहा षड्जग्रहांशन्यासा प्रातः गेया इति शेषः । श्रीरागमेल एव ॥ ३१ ॥

**भैरव्यंशन्यासग्रहसा रिपमुद्रिता सदा पूर्णा ॥**
**नित्यं पमुद्रिताऽरिधसांशन्यासग्रहा धवला ॥ ३२ ॥**

भैरवी पूर्णा अंशन्यासग्रहसा षड्जग्रहांशन्यासा रिपमुद्रिता ऋषभपंचमयोर्मुद्रा मुद्रा पंचमविवेके वक्ष्यमाणो वादनविशेषः संजातो यस्यां सा सदा गेया श्रीरागमेल एव ॥ धवला धवलधनाश्रीरिति प्रसिद्धा । अरिधा ऋषभधैवतोना चासौ सांशन्यासग्रहा षड्जग्रहांशन्यासा च सा पमुद्रिता संजातपंचममुद्रा नित्यं गेया इति शेषः । श्रीरागमेल एव ॥ ३२ ॥

**सैंधव्यगानिर्नित्यं सांशन्यासग्रहा लसद्गमका ॥**
**साद्यंतगांशपूर्णः प्रदोषगेयश्च कल्याणः ॥ ३३ ॥**

सैंधवी सिंधोडेति भाषायाम् । अगनिर्गांधारनिषादरहिता सांशन्यासग्रहा षड्जग्रहांशन्यासा लसद्गमकं वक्ष्यमाणवादनभेदः यस्यां सा नित्यं गेया इति शेषः । श्रीरागमेल एव ॥ कल्याणः साद्यंतः षड्जग्रहन्यासश्चासौ गांशः गांधारांशश्च स चासौ पूर्णश्च । प्रदोषे गेयश्च । अयं स्वमेले ॥ ३३ ॥

**पूर्णा सादिरनिर्वा कांबोद्यंशांतसा च सायाह्ने ॥**
**अपराह्णे देवक्रीः सांशन्यासग्रहाऽपा वा ॥ ३४ ॥**

कांबोदी पूर्णा अनिर्वा निषादरहिता वा । सादिः षड्जग्रहा अंशांतसा षड्जांशन्यासा सा सायाह्ने गेया इति शेषः । इयं स्वमेले ॥ देवक्रीः वा विकल्पेन अपा पंचमरहिता खाडविता पूर्णा वा इत्यर्थः । सांशन्यासग्रहा षड्जग्रहांशन्यासा अपराह्णे गेया इति शेषः । इयं कांबोदीमेले ॥ ३४ ॥

**मल्लारिर्नटयुगपि स धांशांतादिरगनिश्च संगचभाः ॥**
**सांतादिगांशपूर्णो मध्यान्हे पूर्वगौडः स्यात् ॥ ३५ ॥**

मल्लारिः अगनिः गांधारनिषादरहितः धांशांतादिः धैवतग्रहांशन्यासा संगवभाः संगवे शोभितगानः । अयं स्वमेले ॥ नट्युक् सः मल्लारिरपि नट-मल्लारिरपि मल्लारिवत् अगनिः धांशांतादिः संगवभाश्चेत्यर्थः । अयं मल्लारिमेले ॥ पूर्वगौडः सांतादिः षड्जग्रहन्यासश्चासौ गांशः गांधारांशश्च स चासौ पूर्णश्च मध्यान्हे गेय इति शेषः । मल्लारिमेल एव ॥ ३५ ॥

**सन्यासग्रहगांशा मनिहीनोषसि स्मृतेह भूपाली ॥**
**न्यल्पो मध्यान्हार्हो धांशन्यासग्रहो गौडः ॥ ३६ ॥**

भूपाली मनिहीना मध्यमनिषादरहिता सन्यासग्रहा षड्जग्रहन्यासा चासौ गांशा गांधारांशा च इह उषसि स्मृता गेयत्वेनेति शेषः । मल्लारिमेल एव ॥ गौंडः न्यल्पः निषाददुर्बलः धांशन्यासग्रहः धैवतग्रहांशन्यासः मध्याह्लार्हः गीत इति शेषः । मल्लारिमेल एव ॥ ३६ ॥

**पूर्णः सांशन्यासः सग्रह उषसीह शंकराभरणः ॥**
**सांतादिर्गांशपूर्णो नटनारायण इने नमति ॥ ३७ ॥**

शंकराभरणः पूर्णः सांशन्यासः षड्जांशन्यासः सग्रहः षड्जग्रहः इह उषसि गेय इति । मल्लारिमेल एव ॥ नटनारायणः सांतादिः षड्जग्रहन्यासश्चासौ गांशश्च गांधारांशश्च स चासौ पूर्णश्च । इने सूर्ये नमति स्वसमाने अपराह्ले गेय इत्यर्थः । मल्लारिमेल एव ॥ ३७ ॥

**नारायणगौड उषास गांशन्यासग्रहस्तथा गतरिः ॥**
**न्यंशन्यासग्रहकः पूर्णो निश्येव केदारः ॥ ३८ ॥**

नारायणगौडः गतरिः ऋषभवर्जितः तथा गांशन्यास ग्रहः गांधारग्रहांशन्यासः उषसि गेय इति शेषः । मल्लारिमेल एव ॥ केदारः द्वितीयकेदारः

सारंगः संपूर्णः सांशन्यासग्रहः षड्जग्रहांशन्यासः । अपराह्णे रुचिः शोभा यस्य स गीयते इति शेषः । अयं स्वमेले ॥ ४६ ॥

लक्षणसमास एवं दृष्ट्वा नानामतान्युक्तः ॥
मेलग्रहादिपूर्णत्वाद्यैक्येऽप्येषु वादनभिदा भित् ॥
वर्ज्यस्वरोऽवरोहे द्रुतगीतो नेह रक्तिहरः ॥ ४७ ॥

निगमयति । लक्षणसमास उद्दिष्टरागलक्षणसंक्षेपः नानामतानि दृष्ट्वा एवं इति उक्तः ॥ येषां तु रागाणां स एव मेलः त एव ग्रहांशन्यासाः । तदेव पूर्णत्वाद्यन्यतमं तेषां भेदे हेतुमाह—मेलग्रहेति । एषु रागेषु मेलनग्रहादिभिः पूर्णत्वादिना च यदैक्यं तस्मिन्नपि सति वादनभिदा वक्ष्यमाणप्रतिहत्यादिवादनभेदेन भित् भेदः ज्ञेय इति शेषः । यथा गौड्यपेक्षया चैत्याः प्रतिहतिकृतो भेदः । एवमन्यत्रापि । त्याज्यस्वरस्यापि अवरोहे वादनं रक्तिघ्नं न भवतीत्याह—वर्ज्यस्वर इति । इह खाडवेषु औडवेषु च रागेषु अवरोहे द्रुतगीतः त्वरया गीतो वादितो वा वर्ज्यस्वरः रक्तिघ्नो न भवेदिति शेषः ॥ ४७ ॥

सकलकलेत्युपनामकसोमकविहिते हितेऽल्पबुद्धीनाम् ॥
रागाणां च चतुर्थो रागविबोधे विवेकोऽयम् ॥ ४८ ॥

सकलकलेति । रागाणां विवेकः तत्प्रतिपादनसंबंधी चतुर्थश्च । शिष्टं स्पष्टम् ॥ ४८ ॥

सकलकलेत्युपनामकमुद्गलसूरिसुतसोमनाथेन ॥
रागविबोधविवेकश्चतुर्थ एवं मनाग्विवृतः ॥ १ ॥

इति रागविबोधे चतुर्थो विवेकः समाप्तः ॥ ४ ॥

# श्रीसोमनाथविरचितो रागविबोधः ।

---

स्वकृतटीकया समेतः ।

तत्र

पञ्चमो विवेकः ।

घारपुरे इत्युपनामकेन गणेशशास्त्रिसूनुना पुरुषोत्तमेन

विद्वत्साहाय्येन संशोधयित्वा

पुण्याख्यपत्तने

जगद्धितेच्छुनाम्नि मुद्रणालये मुद्रापयित्वा

प्राकाश्यं नीतः ।

---

शाके १८१७

---

मूल्यम्—पादोनरूपकद्वयम् ।

प्रापणव्ययस्त्वाणकद्वयम् ।

# रागविबोधे

## पंचमो विवेकः ।



आर्यासूनुसमानं प्रणम्य मानं धरासुरैः प्रवरैः ॥
झाम्पात्रयातयालं मुद्गलमालंबदं कलये ॥
दक्षिणे लक्ष्मणो यस्य वामे च जनकात्मजा ॥
पुरतो मारुतिर्यस्य वंदे तं रघुनंदनम् ॥

**तेष्विति मेलक्रमतः समासतो लक्षितेष्वहं कतिचित् ॥**
**तानुद्दिशामि कालक्रमतो व्यासेन लक्षयितुम् ॥ १ ॥**

रागाणां चतुर्थरागरंगांतान् रागान् मेलक्रमेण ससंक्षेपं लक्षयित्वा तेषां मध्ये प्रभातप्रातःसंगवमध्याह्नापराह्णसायाह्नप्रदोषरात्रिकालेषु सर्वकाले च गातव्यानां केषांचन सविस्तरलक्षणार्थं प्रभातादिकालक्रमेण उद्देशं प्रतिजानाति— **तेष्विति** । मेलक्रमतः समासत इति लक्षितेषु तेषु तेषु कतिचित् तान् व्यासेन विस्तरेण लक्षयितुं कालक्रमत उद्दिशामि नाममात्रेण कीर्तयामि ॥ १ ॥

**शंकरभूषणवेलावल्यौ भूपालिका शुचिर्ललिता ॥**

सवसंतो हिंदोलो विभासललितश्च जैताश्री ॥ २ ॥
धन्याशीभैरवपौरविकास्तोडी तुरुष्कतोड्यन्या ॥
मल्लारिर्नटपूर्वः स च गौंडः पूर्वगौडश्च ॥ ३ ॥
देशीकारः शुद्धवराटी वहुला ततश्च सारंगः ॥
नटनारायणदेवक्रियौ च सौराष्ट्रिका गौडी ॥ ४ ॥
चैत्तीपूर्वीत्रावणि काम्वोदी शुद्धनाटमाभीरी ॥
कल्याणः श्रीरागो मालवगौडोऽथ गौडश्च ॥ ५ ॥
कर्णाटाड्डाणौ वर्णनाटहम्मीरकौ च केदारः ॥
सविहंगड इत्युष आद्यष्टसु कालेषु गातव्याः ॥ ६ ॥

एकपंचाशत उद्देशमेवाऽऽह—शंकरभूषणेत्याभिरष्टभिः । शंकरभूषणः स च वेलावली च ते । शुचिर्ललिता सवसंतः वसन्तसहितः वसन्तो हिन्दोलश्चेत्यर्थः । विभासललितः विभासभेदोऽन्यो ललितः । धन्याशीभैरवपौरविका एकं पदं । अन्या तुरुष्कतोडी हुसेनीति लोके । मल्लारी नटपूर्वः स च नटमल्लारिश्च पूर्व गौडश्च पूर्व्या इति लोके देशीकारः शुद्धरामक्रीः ततश्च तत्परं च नटनारायणदेवक्रियौ च सौराष्ट्रिका सोरठीति लोके । चैत्ती पूर्वी त्रावणी इति तिसृणां समाहारद्वंद्वेन पुंसवत्त्वाद्ध्रस्वः । कर्णाटश्च अड्डाणश्च तौ । वर्णनाटहम्मीरकौ च । केदारः स विहंगडः केदारो विहंगडश्चेत्यर्थः । शिष्टं स्पष्टम् । इति एते उषआद्यष्टसु उष आदयश्च ते अष्ट च तेषु गातव्याः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

शंकरभूषाद्या उषसि हि जैताश्रीमुखास्ततः प्रातः ॥
संगव इह तोड्याद्या मध्यान्हे गौंडकप्रमुखाः ॥ ७ ॥
अपराह्ले वहुलीतः प्रभृति च सायाह्नके तु सौराष्ट्र्याः ॥
शुचिनाटतः प्रदोषे निशि कर्णाटात्सदा त्वेते ॥ ८ ॥
मालाश्रीर्धवलाऽथ मुखारी रामक्रिया सपावका ॥
सैंधव्यासावरिका गांधारो मारवी परजः ॥ ९ ॥

निजनिजकालेऽप्येते क्रमतो गेया अथ क्रमाद्विविधैः ॥
आर्याछंदोबद्धैर्लक्षय एतान्परं रूपैः ॥ १० ॥

तत्र कस्मिन्काल इत्यत्राऽऽह द्वाभ्यां मात्रासप्तकोनाभ्याम्। **शंकरभूषाद्या इति** । शंकरभूषा शंकराभरणः । तदाद्याः सप्तेत्यर्थात्। उषसि हि प्रभात एव गातव्या इति शेषः । ततः जैताश्रीमुखा एतत्प्रभृतयश्चत्वार इत्यर्थात्। प्रातः पंचधाविभक्तदिनस्य पूर्वभागे ॥ इह तोड्याद्याः तोडीप्रमुखाः चत्वार एव संगवे तस्यैव द्वितीयभागे ॥ गोंडप्रमुखाः गोंडादयश्चत्वार एव मध्यान्हे तस्यैव तृतीयभागे ॥ बहुलीतः प्रभृति तु तामारभ्य चत्वारो रागा इत्यर्थात्। अपराह्णे तस्यैव चतुर्थभागे ॥ सौराष्ट्र्याश्च प्रभृतीत्येव सौराष्ट्रीप्रभृति षट् रागाः सायान्हके तस्यैव पंचमभागे ॥ शुचिनाटतः प्रभृतीत्येव शुद्धनाटाद्याः षट् रागाः प्रदोषे त्रिमुहूर्तात्मके रजनीमुखे ॥ कर्णाटात् प्रभृतीत्येव कर्णाटप्रभृति षट् रागाः निशि रात्रौ ॥ एवं एते प्रभातादिषु अष्टसु गातव्या इत्यर्थः ॥ अत्र प्रतिकालमपि उद्देशे क्रमेणैवेत्यपि ज्ञेयम् ॥ सर्वदा गातव्यानाह—**सदा त्वेत इति** ॥ एते तु रागाः सदा निरंतरं गातव्या इत्येव ॥ तानेव दश रागानाह—**मालाश्रीरिति** ॥ अथ चपरम् । सपावका रामक्रिया । रामक्रिया पावकश्चेत्यर्थः ॥ आसावरिका आसावरी । शिष्टं स्पष्टम् ॥ प्रभातादिकालगानेऽपि विशेषमाह—**निजनिजेति** । निजनिजकाले स्वस्वसमयेऽपि एते क्रमतः उद्देशक्रमेण गेयाः । यथा प्रभाते गेयेष्वपि पूर्वं शंकराभरणो गेयः । ततो वेलावली । ततोऽपि भूपाली इत्यादि । एवं प्रातरादिकाले गेयेष्वप्यथ रागाणां लक्षणं रूपद्वारा प्रतिजानीते—**अथ क्रमादिति** । अथ उद्देशानन्तरं एतान् शंकराभरणादीन्क्रमात् रूपैः परं स्वरूपैरेव लक्षये लक्षयिष्यामि तत्तद्रूपविशेषेषु लक्षितेषु ते ते एव रागा लक्षिता भविष्यंति इत्यर्थः । कीदृशैः आर्याछंदोबद्धैः आर्याछंदोयोग्यसरिगमादिवर्णप्रतिपादितैः ॥ विविधैः प्रतिहतिमुखवादनविशेषवशात् नानाप्रकारैः वक्ष्यमाणदेवतारूपेष्वपि आर्याछंदसा प्रतिपादितं गौरादिभावेन नानात्वं च ज्ञेयम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

सुस्वरवर्णविशेषं रूपं रागस्य बोधकं द्वेधा ॥
नादात्मं देवमयं तत्क्रमतोऽनेकमेकं च ॥ ११ ॥

तत्र रूपस्य सामान्यलक्षणमाह—**सुस्वरेति**। सुशोभनो रंजक इति यावत्। स्वराणां षड्जादीनां। वर्णविशेषः उक्तो वक्ष्यमाणश्च गानविशेषो यस्मिन् तादृशं सत् रागस्य बोधकं ज्ञापकं रूपं। येन रंजनकेन विशिष्टगानस्वरसमुदायेन रागो ज्ञायते तत्तद्रूपणान्निरूपणात् रूपमित्यर्थः। वक्ष्यमाणदेवतापक्षे तु सुशोभनः स्वरः कंठश्वरः वर्णः गौरत्वादिः विशेषः अवस्थालंकारादिश्च यस्य तादृशं सत् रागस्य देवदेहधारिणो बोधकं रूपं ज्ञेयम्। एतदेव स्फोटयितुं तस्य द्वैविध्यमाह—**द्वेधेति**। तद्रूपमिति शेषः। द्वेधा द्विप्रकारम्। प्रकारावाह—**नादात्मेति**। नादात्मकं षड्जादिसमूहरूपध्वनिमयम्। देवमयं च देवतादेहमयं च ॥ तद्द्विविधं रूपं क्रमतः अनेकं एकं च एकस्यैव रागस्य नादमयं तु रूपं अनेकं देवतामयं तु एकमेवेत्यर्थः ॥ ११ ॥

तत्र विविच्यत आद्यं लोकव्यवहारविश्रुतं पूर्वम् ॥
अपि यस्य कस्यचिद्यत्पर्यायः स्वरसमूहस्य ॥ १२ ॥

प्रथमनादमयस्य रूपस्य प्रपंचनं प्रतिजानाति—**तत्रेति**। तत्र तयोर्मध्ये आद्यं नादात्मकं रूपं पूर्वं विविच्यते सोपकरणसामग्रीकं प्रकाश्यते पश्चाद्देवतामयं प्रकाशयिष्यत इत्यर्थः। कीदृशम्। लोकव्यवहारविश्रुतं इदं अस्य रागस्य रूपं साधु इदं साधुतरमिति लोकैर्व्यवह्रियमाणमित्यर्थः। तस्य लोके अनियततया आलापादिषु अन्यतमस्य वाचकतामाह—**अपीति**। यत् यस्य कस्यचिदपि स्वरसमूहस्य पर्यायः आलापादिशब्दैर्यद्यदुच्यते तत्तद्रूपशब्देनापीत्यर्थः ॥ १२ ॥

आलापमूर्छनाशुचितानालंकारकूटतानाद्याः ॥

**तत्संकराश्च रूपैरग्रे ज्ञेयाः क्वचित्केऽपि ॥ १३ ॥**

तदेव स्पष्टयन्निगमयति—**आलापेति** । तत् ततो हेतोः आलापाः पूर्वोक्ताः मूर्छना उत्तरमंद्राद्याः शुचितानाः शुद्धतानाः अलंकाराः प्रसन्नाद्याः कूटतानाः स्वरव्युत्क्रमा आद्यपदेन आलप्तिः तत्स्थानचतुष्टयेऽन्यतमं च । संकराः तद्व्यामिश्रणानि च रूपैः अग्रे रूपविशेषनिरूपणप्रसंगे ज्ञेयाः । किं सर्वेऽपि सर्वत्र नेत्याह—**क्वचित्केऽपीति** । एतेषु मध्ये यथा रागं क्वचन क्वचन केऽपि केऽपि तदन्यतमा इत्यर्थः ॥ १३ ॥

**वादनभिदास्वनंतास्वभिधास्ये विंशतिं स्फुटं देश्याम् ॥**
**स्थाने च द्वे द्वाविंशत्या नाम्नां प्रकल्पितया ॥ १४ ॥**

सुस्वरवर्णविशेषमिति रूपलक्षणे विशेषपदसूचितवादनभेदेषु कतिचन स्वकल्पितसंज्ञान्वादनभेदान् उद्देष्टुं प्रतिजानाति—**वादनेति** । अनंतासु वादनभिदासु तिरियस्फुरिताद्याख्येषु गमकस्थायसंकीर्णभेदेषु मध्ये देश्यां स्फुटं प्रसिद्धं विंशतिवादनभिदामित्यर्थात् । चपरं द्वे स्थाने मंद्राद्यन्यतमे अभिधास्ये उद्देश्यामि । कया नाम्नां संज्ञानां प्रकल्पितया द्वाविंशत्या ॥ वादनभेदानां विंशतेर्नामानि स्थानद्वयस्य च द्वे नामानि उद्देश्यामीत्यर्थः ॥ १४ ॥

**प्रत्यान्वपूर्वहतयः पीडादोलनविकर्षगमकानि ॥**
**कंपो घर्षणमुद्रे स्पर्शो नैम्न्यप्लुतिद्रुतयः ॥ १५ ॥**
**परतोच्चताऽथ निजतेशममृदुकठिनानि विंशतिर्द्व्यधिका ॥**
**वादनभेदपदानां वीणायां लक्षणं क्रमतः ॥ १६ ॥**

उद्देशमेवाह द्वाभ्यां पादोनाभ्याम्—**प्रत्यान्वपूर्वेति** । प्रत्यान्वाः पूर्वे याम्यस्ताश्च ता इतयश्च । प्रतिहतिः । आहतिः । अनुहतिः । अहतिरित्यर्थः । पीडादोलनविकर्षगमकानिति चतुर्णां द्वंद्वः। कंपो घर्षणं च मुद्रा च ते। स्पर्शनैम्न्यं च प्लुतिश्च द्रुतिश्च ताः।।परता उच्चता। अथ चार्थे। निजते निजता च द्वयम्। शमश्च

मृदु च कठिनं च तानि । इतीति शेषः । वादनभेदाश्च स्थाने च तेषां व्यधिकविंशतिः । तत्र प्रतिहत्यादिशमांतानिः वादनभेदनामानि । मृदुकाठिने तु स्थाननामनीति ज्ञेयम् ॥ अथ कंठसंवादिन्यां वीणायां तान् क्रमेण लक्षयितुं प्रतिजानाति—**वीणायामिति** ॥ अस्य लक्षणं क्रमतः भेदानां कथ्यत इति च शेषः ॥ १५ ॥ १६ ॥

**प्रतिहतिरंतद्रुतमुच्छलनवतो हतियुगाद्गभीररवः ॥**
**आहतिरन्यध्वनने हतिं विनान्यस्वराश्रावः ॥ १७ ॥**

तत्र प्रतिहतिं लक्षयति—**प्रतिहतिरिति** । हतियुगात्तंत्रीनखाघातद्वयात् हेतोः गभीररवः हुंकारशब्दानुकारी गंभीरध्वनिः प्रतिहतिः । उच्यत इति शेषः सर्वत्र । कीदृशात् अंतः मध्ये द्रुतं अतिशीघ्रं उच्छलनवत् । एकमाघातं कृत्वा अतिशीघ्रं किंचिदंगुल्युच्छालनेन किंचिदेव पूर्वस्वरप्रदर्शने तत्समकालं द्वितीयाघातात् हुंकारसमध्वनिः प्रतिहतिरित्यर्थः । अंगुलीस्थापनेन वादनविधिं अग्रे कथयिष्यति ॥ आहतिं लक्षयति—**आहतिरिति** । अन्यध्वनने अपरस्वरस्य रणने हतिं नखाघातं विना तेनैव ध्वननेन अन्यस्वराश्रावः अपरस्वरस्य सः आश्रावः श्रावणं प्रदर्शनमिति यावत् । सा आहतिः । येन केन प्रकारेण पूर्वस्वरस्य ध्वनने हतिं विना तेनैव ध्वननेन अव्यवहितस्य व्यवहितस्य वा परस्वरस्य प्रदर्शनं तथा तादृशे एव परस्वरस्य ध्वननेन तेनैव ध्वननेन अव्यवहितस्य व्यवहितस्य वा पूर्वस्वरस्य प्रदर्शनं आहतिरित्यर्थः ॥ १७ ॥

**अनुहतिरेकहतेः प्रतिहतिवत्सैव त्वहतिरघातात्स्यात् ॥**
**पीडा पीड्यविमुक्तिर्दोलनमाकर्षणागमने ॥ १८ ॥**

अनुहतिं लक्षयति—**अनुहतिरिति** । एकनखाघातादेव प्रतिहतिवत् गंभीरध्वनिरिति शेषः । अनुहतिः एकमेवाघातं कृत्वा अतिशीघ्रमेव किंचिदंगुलेरु-

च्छालनेन किंचित्पूर्वस्वरं प्रदर्श्य तदाच्छादनेन हुंकारसमध्वनिरनुहतिरित्यर्थः॥ अहतिं लक्षयति—**सैव त्वहतिरिति** । सैव अनुहतिरेव आघातात् नखाघातं विना गंभीरध्वनिरित्येव अहतिः स्यात् । सर्वथा नखाघातं विनैव आहतिः ध्वननविशेषेण । वक्ष्यमाणघर्षणध्वननविशेषेण वा पूर्ववत् हुंकारशब्दानुकारिगंभीरध्वनिकरणं अहतिरित्यर्थः ॥ पीडां लक्षयति—**पीडेति** । आपीड्य विमुक्तिः । पीडा अंगुल्युदरेण अग्रिमनखरं गाढं संस्पृश्य तत्समकालमेव पूर्वस्वरप्रदर्शनं पीडेत्यर्थः॥ दोलनं लक्षयति–**दोलनमिति**।आकर्षणं विकर्षणं च आगमनं निवर्तनं च ते दोलनम् । एकेनैवाघातेन परस्परस्य किंचिन्न्यूनैकश्रुतिपर्यंतं विकर्षणं कृत्वा शनैः तथैव निवर्तनेन पूर्वत्रावस्थानं दोलनमित्यर्थः ॥ १८ ॥

**आकर्षणं विकर्षो दोलनमेव हि पुनः पुनर्गमकम् ॥**
**स्पष्टः कंपो घर्षणमेकहतिर्द्राक्स्वरांतरकृत् ॥ १९ ॥**

विकर्षणं लक्षयति—**आकर्षणमिति** । आकर्षणं आकर्षणमात्रं विकर्षः दोलनमेव निवर्तनरहितं विकर्ष इत्यर्थः॥ गमकं लक्षयति—**दोलनमेव हीति** । पुनः पुनः दोलनमेव हि गमकम् ॥ एकेनैवाघातेन त्रिःचतुर्वा शनैः दोलनकरणं गमकमित्यर्थः । एवहीति निपातसमुदायोऽवधारणे ॥ कंपं लक्षयति–**स्पष्टः कंप इति** । कंपनं कंप इत्यन्वर्थः कंपः । किंतु एकेनैवाघातेन दोलन चतुर्थांशसमं द्रुतं तत्रैव द्विस्त्रिर्वा कंपनं कंप इति ज्ञेयम् ॥ घर्षणं लक्षयति–**एकहतिरिति** । एकाघात एव द्राक् शीघ्रं स्वरांतरकृत् । स्वरांतरकरणे सति घर्षणम् । एकाघातानंतरं शीघ्रं घर्षणेन परेषां पूर्वेषां वा अव्यवहितानां वा स्वराणां प्रकाशनं घर्षणमित्यर्थः ॥ १९ ॥

**मुद्रा परैकहननात्प्रदर्श्य पूर्वं पुनस्तदाच्छादः ॥**
**आहतिरेव स्पर्शो द्रुतमुक्ता दृढहतिर्नैम्न्यम् ॥ २० ॥**

मुद्रां लक्षयति—**मुद्रेति** । परैकहननात् परस्वरस्यैकाघातादेव पूर्वस्वर-

मितिशेषः। प्रदर्श्य स्पष्टं दर्शयित्वा पुनः परस्वरे अंगुलिस्थापनेनेति शेषः तदाच्छादः पूर्वस्वराच्छादनं मुद्रेत्यर्थः ॥ अनुहतौ तु अतिशीघ्रं अंगुल्युच्छालनेन गंभीरध्वनिः। मुद्रायां तु शनैरंगुल्यूर्ध्वीकरणेन तदभाव इति भेदः ॥ स्पर्शं लक्षयति—**आहतिरेवेति**। द्रुतं शीघ्रं मुक्तं आहतस्वरत्यागः यस्यां सा आहतिरेव स्पर्शः। यद्यपि आहतिरेवेति सामान्येनोक्तं तथापि पूर्वस्वरध्वनन एव परस्वरं किंचित् स्पृष्ट्वा द्रुतं पूर्वस्वरप्रदर्शनं स्पर्श इति ज्ञेयम् ॥ नैम्न्यं लक्षयति—**दृढहतिरिति**। दृढा या हतिः आघातः सा नैम्न्यम्। येन नखाघातेन तंत्री अध इव गच्छति तन्नैम्न्यमित्यर्थः ॥ २० ॥

**प्लुतिरष्टस्वरघर्षो द्रुतिस्त्वरावादनं ततः परता ॥**
**पूर्वेऽग्रयस्याकर्षणमथोच्चता तत्तृतीयस्य ॥ २१ ॥**

प्लुतिं लक्षयति—**प्लुतिरिति**। अष्टानां स्वराणां यो घर्षो घर्षणं सा प्लुतिः। एकेनाऽऽघातेन घर्षणतो द्रुतमष्टस्वरोत्पादनं प्लुतिः। अन्यत्तु घर्षणमिति भेदः ॥ द्रुतिं लक्षयति—**द्रुतिस्त्वरावादनमिति**। त्वरावादनं अन्यस्वरवादनापेक्षया शीघ्रवादनं द्रुतिः ॥ परतां लक्षयति—**ततः परतेति**। पूर्वे स्वरे अग्रस्य अनंतरस्य द्वितीयस्य आकर्षणं परता। षड्जादिसारिषु आकर्षणेन ऋषभादिस्वरप्रकाशनं परतेत्यर्थः ॥ उच्चतां लक्षयति—**अथोच्चतेति**। पूर्वे इत्येव। पूर्वे स्वरे तृतीयस्य पूर्वापेक्षया तृतीयस्वरस्य आकर्षणमित्येव उच्चता। षड्जादिसारिषु अधिकाकर्षणेन गांधारादिस्वरप्रकाशनमुच्चतेत्यर्थः ॥ २१ ॥

**निजते तु तयोः पौर्व्ये क्वापि सघाते शमो विलंबः स्यात्।**
**मृद्विह मंद्रं स्थानं कठिनं तारमथ संकेताः ॥ २२ ॥**

निजताद्वयं लक्षयति—**निजते त्विति**। तयोः पूर्वस्वरस्थानाकृष्टद्वितीयस्वरस्य पूर्वस्वरस्थानाकृष्टतृतीयस्वरस्य च पौर्व्ये पूर्वयोर्भावौ ते निजते तु

षड्जादिषु सारीषु आकृष्टानां ऋषभादीनां शनैस्तंत्रीशैथिल्येन पुनः षड्जाद्यापादनं परतायाः निजता । तथैव षड्जादिसारीषु आकृष्टानां गांधारादीनां शनैरेव तंत्रीशैथिल्येन पुनः षड्जाद्यापादनं उच्चतायाः निजता इत्यर्थः ॥ एते द्वे अपि एकाघातेन कर्तव्ये ॥ लक्ष्यवशेन क्वचिदनयोरेव मध्ये द्वितीयमप्याघातमाह—**कीदृश्यौ क्वापि संघाते इति** । मध्ये आघातांतरसहिते एकेनाऽऽघातेन पूर्वं द्वितियस्य तृतीयस्य वा कर्षणं कृत्वा पुनर्द्वितीयाघातं कृत्वा पूर्वस्वरतापादनमपि क्वचिदनयोरित्यर्थः । अतो न विंशतिसंख्याधिक्यमिति भावः । एतद्यथायथमग्रे दर्शयिष्यते ॥ शमं लक्षयति—शम इति । विलंबः शमः स्यात् । स्वरं प्रकाश्य लक्षणं तूष्णीमवस्थानं शम इत्यर्थः ॥ एवं वादनभेदविंशतिं लक्षयित्वा मृदुकठिनाख्यस्थानद्वयं लक्षयति—**मृद्विति** । इहानयोर्मध्ये मंद्रस्थानं मृदु । तारं स्थानमित्येव कठिनम् । मृदुपदेन मंद्रस्वराः कठिनपदेन तारस्वराश्च ज्ञेया इत्यर्थः ॥ चिह्नान्यपि वक्तुं प्रतिजानाति—**अथ संकेता इति** । विंशतिरेव वादनभेदचिह्नानि द्वे स्थानचिह्ने च रूपलिखितेषु सारिगमादिषु कथ्यंत इत्यर्थः ॥ २२ ॥

**प्रत्यान्वपूर्वकहतिषु बिंदू बिंदुः सरेखया द्विगुणः ।**
**सोऽधः सोऽग्रे शुद्धः पीडायां दोलने तु गुरुः ॥ २३**
**ऊर्ध्वं उपरि स च तिर्यग्विकर्षे उर्ध्वं सगमक ऊर्ध्वोऽग्रे ।**
**कंपे रेखोर्ध्वोर्ध्वं तिर्यक्सा घर्षणे शिरसि ॥ २४ ॥**
**मुद्रायां सैवाधः स्पर्शेऽधो अर्धचंद्र ऊर्ध्वं स्यात् ।**
**नैम्न्ये सोऽधः सोऽग्रे प्लुत्यां स्वरशृंखला द्व्याम् ॥ २५ ॥**
**परतायां तु गुरुरधःस्थायी तिर्यक्स उच्चतायां तु ॥**
**ऊर्ध्वाधोऽथ निजतयोः परताया उच्चताया वा ॥ २६ ॥**
**लंबोर्ध्वबिंदुचिह्नं लंबो बिंदुः शमे भवेत्पुरतः ॥**
**उपरि स तूर्ध्वो मृदुनि च कठिने तिर्यक्स ऊर्ध्वं स्यात् ॥२७॥**

तानेवाह पंचभिः॥ तत्रापि पूर्वेषु चतुर्ष्वाह—प्रत्यान्वपूर्वकहतिष्विति । संके-

त इति सर्वत्र । प्रतिहतौ संकेतः अधः आर्यालिखितसरिगादीनामिति सर्वत्र शेषः । तेषां अधस्तात् बिंदुवलयाकारौ द्वौ ॥ आहतौ सं० सादीनां अधः बिंदुः एको वलयाकारः ॥ अनुहतौ सं० सः रेखया रेखोपलक्षितो बिंदुः सादीनां अधः । अहतौ सं० स द्विगुणः बिंदुः । उपरि पुनरावृत्तः वलयाकारः अध एव ॥ चत्वारोऽपि यथा स स स स ॥ पीडायां संकेतः स बिंदुः शुद्धः अग्रे सादीनां पुरस्तात् । यथा स० ॥ दोलने तु संकेतः । ऊर्ध्वः न तु तिर्यक् गुरुः द्विवक्रा रेखा उपरि सादीनां शिरसि । यथा स ॥ विकर्षे संकेतः सच गुरुरेव तिर्यक् तिरश्चीनः ऊर्ध्वं सादीनामुपर्येव । यथा स ॥ गमके संकेतः स गुरुः ऊर्ध्वः अग्रे सादीनां पुरस्तात् । यथा स~॥ कंपे संकेतः ऊर्ध्वा रेखा सरला रेखा उर्ध्वं सादीनामुपरि । यथा स । घर्षणे संकेतः सा रेखा तिर्यक् । शिरसि सादीनामुपरि । यथा स । मुद्रायां संकेतः सैव तिर्यग्रेखैव अधः सादीनां । यथा स ॥ स्पर्शे अथो संकेतः अर्धचंद्रः अर्धवलयाकारः ऊर्ध्वं सादीनां स्यात् । यथा सँ ॥ नैम्न्ये संकेतः सः अर्धचंद्रः अधः सादीनां । यथा स ॥ स्फुत्यां संकेतः सः अर्धचंद्रः अग्रे सादीनां यथा स ॥ द्रुत्यां संकेत स्वरशृंखला स्वरयोः स्वराणां वा अधो निगडनं यथा । सारिग ॥ परतायां तु संकेतः ॥ तिर्यग्गुरुः अधस्थायी । यथा स ॥ उच्चतायां तु संकेतः । सः तिर्यक् गुरुः ऊर्ध्वाधः उपरि अधश्च ॥ यथा स ॥ अथ निजतयोः परता निजतयाः उच्चता निजतायाश्च संकेतःपरतायाः चिह्नं अधस्था तिर्यग्गुरुरूपलंब अवर्तुलः सन् ऊर्ध्वः अतितिरश्चीनः बिंदुर्यस्मिन् तत् । लंबोर्ध्वबिंदुना प्रांते युक्तमित्यर्थः ॥ उच्चताया वा उच्चतायाश्च चिह्नं, ऊर्ध्वाधः स्थिततिर्यक् गुरुरूपं लंबोर्ध्वबिंदु अध एवेति ज्ञेयं ॥ अन्यथा वक्ष्यमाणमृदुस्थानचिह्नस्य संदेहः स्यात् ॥ यथा ॥ स । स ॥ शमे संकेतः । लंबो बिंदुः पुरतः सादीनामग्रे भवेत् ॥ ऊर्ध्व एवेति ज्ञेयम् ॥ यथा ॥ स० ॥ मृदुनि च मंद्रस्थाने च संकेतः सः लंबबिंदुः ऊर्ध्वः अतिरश्चीनः सादीनां उपरि यथा ॥ स । काठिने तारस्थाने संकेतः सः

लंबबिंदुरेव तिर्यक् तिरश्चीनः सन् ऊर्ध्वं सादीनां उपरि स्यात् । यथा । सँ
॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

**इति संकेतष्वेको द्वौ बहवो वा स्वरे स्युरेकस्मिन् ॥**
**यत्रैकवादनं द्विस्तत्संकेतोऽपि तत्र द्विः ॥ २८ ॥**

**लंबेन विंदुनोनाः शीर्षे मध्यस्वरा इह ज्ञेयाः ॥**
**प्रारब्धरूपपूर्तौ पद्माकारश्च संकेतः ॥ २९ ॥**

**यथा ॥ स । स । स । स ॥ स० । स^ । सँ । स˅ । सं ।**
**स॑ । स । सॅ । स । स˜ । सरिग । स । सॅ । स । सॅ ।**
**स० । सं । स0 । सँ । स ❊**

संकेतान्निगमयन् एकस्मिन्नेव स्वरे बहुधा वादनभेदवशात् संकेतानामपि बाहुल्यमाह—**इति संकेतेष्विति** । इति एवं द्वाविंशतौ संकेतेषु मध्ये इत्यर्थात् एकः द्वौ बहवः ॥ एकद्वित्र्यादिसंकेताः एकस्मिन्स्वरे स्युः बहुषु बहवो भवंत्येव ॥ किंतु एकस्मिन्नपि स्युरित्यर्थः ॥ एकत्रैव एकस्य वादनस्य पुनरावृत्तौ तत्संकेतस्यापि पुनरावृत्तिमाह—**यत्रैकवादनं द्विस्तत्संकेतोऽपि तत्र द्विरिति** । स्पष्टम् ॥ २८ ॥ मध्यस्वराणां संकेताकरणेऽपि ज्ञानोपायमाह-**लंबेनेति** ॥ इह रूपेषु शीर्षे उपरि लंबेन विंदुना ऊना रहिता ॥ स्वरा इति शेषः ॥ मध्यस्वरा ज्ञेयाः ॥ शिरसि ऊर्ध्वविंदुना युक्ताः मंद्रस्वराः ॥ शिरसि तिरश्चीन लंब विंदुयुक्ताश्च तारस्वराः शिरसि तदुभयरहितास्तु पारिशेष्यान्मध्यस्वरा इत्यर्थः ॥ रूपसमाप्तिसूचकं संकेतान्तरमाह—**प्रारब्धेति** ॥ प्रारब्धं लिखितुमारब्धं यद्रूपं तस्य पूर्तौ समाप्तौ पद्माकारः चतुरादिदलकमलाकारः संकेतः ॥ त्रयोविंशतिरपि संकेताः क्रमतो यथा ॥

स । स । स । स । स० । सै । सैं । सैं । सं ।
प्र आ अनु अ पी दो वि गम कं

सं । स । सँ । स । स- । सरिग । स । सैं । स
घ मु स्प नैम्न्य प्लुति द्रुति पर उच्च प

सं । स । स0 । स ※ ॥ २९ ॥

निजनिजमेले शुद्धास्तीव्रर्याद्याश्च ये यथैव स्युः ॥
सरिगमपधनीतिपदैर्ज्ञेयास्ते लाघवायोक्तैः ॥ ३० ॥

रूपगसादिषु सह्यं सूत्रत्वादिह विभक्तिराहित्यम् ॥
वादनसिध्यै रचितं मयेति पूर्वैरनुक्तमपि ॥ ॥ ३१ ॥

रूपे सारिगेत्यादि सामान्यलक्षितेष्वपि स्वरेषु शुद्धत्वं विकृतत्वं च स्वस्वमेलवशात् ज्ञेयमिति मंदबोधनायाऽऽह—निजनिजमेले इति ॥ स्वस्वमेले शुद्धाः तीव्रर्याद्याः तीव्ररीप्रमुखभेदाश्च ये यथैवस्युः ते तथैवेत्यर्थात् ज्ञेयाः कैर्लाघवाय उक्तैः सरिगमपधनीति पदैः तीव्ररीत्याद्युक्तौ तु ग्रंथगौरवं स्यात् इत्यर्थः ॥ ३० ॥ ननु पदैरित्युक्तं तत्र सारिगादीनां न क्वापि विभक्त्यंततया पदत्वमित्यत्राह—रूपगसादिष्विति ॥ इह एषु रूपगतेषु सारिगादिषु विभक्तिराहित्यं सह्यं बुधैः सोढव्यं । हेतुमप्याह॥ सूत्रत्वादिति ॥ स संकेतः सरिगमादिशब्दानां लोकप्रसिद्धरागरूपगायनः सूचकत्वात्सूत्रत्वं ॥ ततश्च छंदोवत्सूत्राणि भवंतीति वचनात् सुपां सुलुगिति छांदसो विभक्तिलुगित्यर्थः ॥ एवं कल्पितसंज्ञा संकेतानां प्राचीनानुक्तत्वदोषं फलतात्पर्येण परिहरिति—वादन सिध्यै रचितं मयेति। पूर्वैरनुक्तमपीति । स्पष्टम् ॥ ३० ॥ ३१ ॥

**मध्यमिकाग्रोदरतः क्रमाज्जठरपृष्ठतश्च तर्जन्याः ॥**
**वाद्योर्ध्वतंत्र्याऽपि सह श्रुतयः पृष्ठ्या कनिष्ठायाः ॥ ३२ ॥**

अथ रागरूपवादनोपयोगिनीं परिभाषां वदन् दक्षिणहस्तांगुलिव्यापारं द्वाभ्यामाह—**मध्यमिकेति** ॥ ऊर्ध्वतंत्री मेरुस्था चतुर्थतंत्रिका मध्यमिकाग्रस्य मध्यमांगुलिनखाग्रस्य यत् उदरमधोभागस्तेनेति ततः परं तर्जन्या नखाग्रस्येति शेषः। जठरपृष्ठतः तर्जनी नखाग्राधोभागोर्ध्वभागाभ्यां क्रमतः मध्यमाघातपूर्वं वाद्या वादनीया। श्रुतयोऽपि श्रुतित्रयं च कनिष्ठायाः नखस्येत्येव पृष्ट्या पृष्ठिभागेन वाद्याः कथं सह तर्जनीपृष्ठाघातेन समं ॥ पूर्वामूर्ध्वं तंत्री मध्यमा नखाग्राधोभागेन वादयेत। ततः तर्जन्यंशपृष्ठेन वादयत् तदैव श्रुतित्रयं कनिष्ठा नखपृष्ठेनएमुहुरित्यर्थः ॥ ३२ ॥

**स्थायादिष्विति नियतं यथेष्टमन्यत्र मध्यमोपजयोः ॥**
**उदराभ्यां पृष्टिभ्यां चतुर्द्रुतहतिस्तु कर्तर्याम् ॥ ३३ ॥**

इति तद्वादनं स्थायादिषु स्थायप्रबंधादिषु प्रकाशने नियतं अवश्यं कर्तव्यं ॥ स्थायो नाम न्यासापन्याससन्यासविन्यासान्यतमस्वरविश्रांतत्वेन प्रयुक्तः कतिपयस्वरसंदर्भरूपो मुहुरावर्त्यमानो रागैकदेशः ॥ रागस्यावयवस्थाय इति निःशंकोक्तेः ॥ स्थायभेद इति लोके अन्यत्र आलापादिषु प्रथमादूर्ध्वतंत्रीत्रयवादने च यथेष्टं कृताकृतं ॥ अत्रैव कर्तर्याख्यवादनमाह—**मध्यमोपजयोरिति** ॥ कर्तर्यां तु चतुः चतुर्वारं द्रुतहती ॥ अतिशीघ्रमाघातः ॥ काभ्यां ॥ मध्यमा च उपजातत्समीपजाता तर्जनी च ॥ तयोर्नखाग्रयोरिति शेषः ॥ उदराभ्यां पृष्ठिभ्यां च ॥ क्रमत इत्येव ॥ पूर्वं मध्यमा तर्जनी नखयोरुदराभ्यां क्रमतो द्रुतं वादनं ततस्तयोरेव पृष्ठाभ्यां क्रमतो द्रुतं वादनमिति चतुर्घाता कर्तरीत्यर्थः ॥ ३३ ॥

**दक्षिण करप्रचारो गदितो विस्तरभयादियानेव ॥**

अथ सव्यहस्तकृत्यं कथयाम्यूर्ध्वासु तंत्रीषु ॥ ३४ ॥
मध्यमया चाऽऽरोहस्थाप्यापूर्वे च तर्जनी तूष्णीम् ।
उक्तिभिदां सिध्यै प्रायस्तर्जन्यावरोहस्तु ॥ ३५ ॥
क्वाप्यारोहेऽपि तथा अंगुलिचालश्च शुद्ध नाटादौ ।
मंद्रानुमंद्रयोः स्यात् परिभाषावादनस्येति ॥ ३६ ॥

दक्षिण करप्रचारं निगमयन् वामहस्तांगुलिकृत्यं ऊर्ध्वास्वेव तंत्रिकासु प्रतिजानाति–दक्षिणकरप्रचार इति ॥ अयं विस्तरभयात् इयानेव एतावानेव गदितः कथितः ॥ अथ अतःपरं सव्यहस्तकृत्यं ऊर्ध्वासु तंत्रीषु कथयामि ॥ ३४ ॥ तदेवाह—मध्यमयेति द्वाभ्याम् ॥ पादोनाभ्याम् ॥ मध्यमया च वामहस्तस्येत्यर्थात् ॥ आरोहः कार्य इति शेषः ॥ तर्जनी च वामहस्तस्येत्येवपूर्वे स्वरे इति शेषः । तूष्णीं स्थाप्या ॥ द्वौ च शब्दौ एककलतां सूचयतः ॥ मध्यमया परपरस्वरावलं च न समकालमेव पूर्वस्वरसारिकायां नादप्रकाशनं विनाऽपि तर्जनी स्थाप्येत्यर्थः ॥ किमर्थं । उक्तभिदां प्रतिहतिप्रभृतिभेदानां प्रायः बाहुल्येन सिध्यै ॥ मध्यमया ॥ उच्छालनादिना पूर्वस्वरध्वननायेत्यर्थः ॥ प्रायो ग्रहणादवरोहे क्वचित्तर्जन्याऽपि उछालनादिना प्रतिहत्यादिसिद्धिः ॥ अवरोहस्तु तर्जन्या कार्य इत्येव ॥ क्वापि तया तर्जन्या अपि आरोहः ॥ आहतिस्पर्शादिसौकर्यार्थमित्यर्थः ॥ चपरं शुद्ध नाटादौ आदि शब्दोऽत्र प्रकारे नतु व्यवस्थायाम् ॥ मंद्रानुमंद्रयोरंगुलिचालः तिसृणामंगुलीनां वामकरस्य तर्जनीमध्यमानामिकानां चालनं मध्यतारयोस्तु तर्जनीमध्यमयोरेव चालनमित्यर्थः ॥ निगमयति–परिभाषा वादनस्येति । स्पष्टं ॥ ३४ ॥ ३५ ॥ ३६ ॥

अथ शंकरा भरण इति समगमरि ग़ रिस०० समगमरि
ग़० गरि ग़ ॥ मप० सं ध निं स सं धपमगमा रि ग़ गरि
ग़ मप० संधंपमगमरि ॥ ३७ ॥

एवं वादनभेदान् ससंकेतं परिभाष्य आर्याभिः स संकेतं स्वरलिखनपूर्वं उद्देशक्रमेण शंकराभरणादि परजांतान् रागान् यथासंभवं संपूर्णखाडवौड-वैर्निजनिजरूपैरेव लक्षयति—अत्र प्रकरणेतु टीका परिभाषा लिख्यते ॥ सप्तभिरेकाद्यं कैर्ज्ञेयाः षड्जादिकाः स्वराः सप्त ॥ वादनभेदाः सपदा वर्णैरिह च स्वनामाद्यैः–अथ शंकराभरण इति॥ अयं तु मल्लारिमेले ज्ञेयः ॥ प्रभातकाले च ज्ञेयः ॥ इति अनेन प्रकारेण ॥ तं प्रकारमेवाह——१।४।३।४ २ विकर्षः २ आहतिः शमः । २ । १ शमो द्विगुणः १।४।३।४।२ विकर्षः ३ आहतिः शमः ३।२ विकर्षः २ । आहतिः । ४।५ शमः । १ कठिनस्थिता मुद्रा । ६ विकर्ष ७ आहतिः । १ कठिनस्थितानैम्न्यं । ६ कंपः । ५।४।३।४।२ विकर्षः ३ आहतिः शमः ३ । २ विकर्षः । ३ आहतिः । ४ । ५ शमः । १ कठि० । ६ कंपः । ५ । ४ । ३ । ४ । २ विकर्षः ॥ ३७ ॥

गृ०गारिगृमप० धं धपमगम । रि ग० गारि गृ०मपमप

गममरि गृ० रि पु ग ॥ मृरि गृ०समृरि गृ०रिस रि-

सरि । गृ रिस निसं धनिंसु धं० पं मं धनिं सु ॥ ३८ ॥

३ आहतिः शमः–३ । २ वि० ३ आ० ४ । ५ शमः–६ दोलनं ६ । ५-४ । ३।४ । २ विकर्ष० ३ आ०शमः ३ । २ वि० ३ आ० श० ४ । ५-४ । ५ । ३ । ४ । ४ । २ वि० । ३ आ० श० २ । ५ मुद्रा । ३ वि० ४ । आ० । २ वि० । ३ आ० श० १ । ४ मुद्रा २ । वि० ३ । आ० श० २ घर्ष० १ घ० २ । १ आ०२ श० ३ आ० वि० । २ घ० १ घ. ७ मृ० १ । ६ मृ० वि० ७ मृ० आ० १ । ६ मृदु० कंपद्वयं शमः ५ मृ० ४ । मृ० श० ६ मृ० वि० ७ मृ० आ० १ मुद्रा ॥ ३८ ॥

धं निृ स* ससुरिगमपध निंस । रि० रि० सं निंसध०

पमगमारिग॒०रिस॰ सरिग ॥ मपयध ॥ निसंरिसंनिसंध-
निसं । रिंसं निसंधनिसं ॥ ३९ ॥

६ मृ० वि० । ७ मृ० आ० । १ पञ्चं । १ । १ नैम्न्यं । २।३।४।५
६ वि० । ७।१ कठि० । २ कठि० दोलनं २ कठि० । १ कठि० । ७।१
कठि० ६ कंपद्वयं शमः ५ । ४ । ३ । ४ । २ वि० । ३ आ० श० २-
१ पञ्चं १ । २ । ३ । ४ । ५ । ६ । ७ । १ कठि० २ कठि० कठि०
६ । ७ । १ कठि २ कठि० । १ कठि० ७ । १ कठि० ६ । ७ । १ क-
ठि० २ कठिन १ कठि० ७ । १ कठि० ६ । ७ । १ कठि० ॥ ३९ ॥

धपम गमारिगम । रिसनि सधनिसारिसानिसधनि-
सरि सानि ॥ सधनिस॰ संत्यपराणि प्रदर्शितं तदपि दि-
ङ्मात्रम् ॥ ४० ॥

२ कटि० प्रतिहतः १ कठि० ७ । १ कठि० ६ । ५ । ४ । ३ । ४
२ । ३ । ४ । २ । १ । ७ मृ० १ । ६ मृ० ७ मृ० १ । २ । १ । ७
मृ० १ । ६ मृ० । ७ मृ० । ७ मृ० । १ । २ प्रति । १ । ७ मृ० १ । ६
मृ० ७ मृ० आहति० । १ पञ्चं ॥ इदमंतिमं रूपं सर्वसद्घतिकं वादनीयं ॥
एवमस्य अन्यान्यपि रूपाणि संति मयातुदिङ्मात्रं प्रदर्शितमित्याह—सं-
त्यपराणि प्रदर्शितं तदपि दिङ्मात्रमिति ॥ अस्य रूपाणि इति च शेषः॥
शिष्टं स्पष्टं । एवमग्रेऽपि ज्ञेयम् ॥ ४० ॥

वेलावली सरिग० धप० । धैधपमग० रिस॰ स० रि-
गप० मगप० सगप० ग.रि० स॰ स० रिग० प , म-
गप०धेसं० । निसानिध निध० धस निध० पग० रिस ॰॥४१॥

वेलावली सरि ग धेति ॥ इयमपि मल्लासरिमेले प्रभातकाले ॥१।२ ३ । श० । ६ । ५ श० ६ ।५ श० ६ दो० १ । ६ । ५ । ४ । ३ श० २ । १ पञ्च । १ श० । २ घ० । ३ घ० । ५ श० । ४ घ० । ३ घ० । ५ श० । ४ घ० । ३ घ० । ४ आ० श० । ३ घ० श० । १ पञ्च । १ पश० । २ । ३ श० । ५ श० । ४ घ० । ३ घ० । ५ श० ६ दो० । १ क० श० । ७ दो । ० कं० आ० दो० । ७ दो० । ६ ७ । ६ आ० श० । ६ । १ क० आ० । ७ वि० । ६ प्रति० श० । ५ ३ श० । २ । १ पञ्च ॥ ४१ ॥

स० रिगम० मप ध० पधे प० मग रिग० रिस*
ससारि मपप० धधनि निधप० ॥ मगरिस* सरिग०
धप० धेधप । मगेरि गगारि० संरि' रिगे गरि' रिस* ॥४२॥

१ श० । २ । ३ । ५ श० । ४ दोलन० । ५ । ६ दो० श० । ५ ६ आ० दो० । ५ श० । ४ घ० । ३ घ० । २ घ० । ३ श० । २ द्रुतिः । १ द्रु० । १ पञ्च । १ । १ नैम्न्यं । २ । ३ । ४ । ५ । ५ श० । ६ दो० । ६ । ७ दो० । ७ । ६ । ५ श० । ४ । ३ । श० २ । १ । पञ्चं । १ । २ । ३ श० ६ । ५ शा० ६ दो० । ६ । ५ । ४ । ३ । २ ३ दो० ३ । २ आ० वि० श० । १ कंपः । २ आ० । दो० । ३ । २ कंपः शम० । २ घ० । २ घ० । १ घ० पञ्च ॥ ४२ ॥

सग ग० रिसरि० धं० स० सनि ध प० ध प० स०
स ‿० * भूपालिकासं० गिरि प० ध० सं० संसं सं
धधप० पपग० गरि । रिरिगे गरि रिसस० सरि स-
धं ॥ प ॥ ४३ ॥

१।३ आ० दो० । ३ दोल० । २।१।२ श० । ६ मृ० श० ।१ श०। २।१०७ मृ० । ६ मृ० । ५ मृ० श० । ६ मृ० ५ मृ० आ० श० । १ श १ छूतिः कठि० ॥ पञ्चं । भूपालिकासरिगपेति ॥ इयमपि मल्लारिमेले प्रभातकाले ॥ १ श ॥ १ श० । २ । ३ । ५ श० ६ श० । १ कठि० श० । १ कठि० दो० । १ कठि० । ६ आ० । ६ घ० । ५ घ० । ५ घ० श० । ५ । ५ दो० । ५ घ० । ३ घ० । ३ घ० श० । २ घ० । २ घ० । २ । २ । ३ आ० दो० । ३ । २ आ० । २ घ० । १ घ० । १ घ० । १ श० । १ । २ आ० दो० । १ घ० भृ० घ० । हत्यं० ६ मृ० घ० । ५ मृ० घश० ॥ ४३ ॥

धं सं० रिस रिग०० गपध संसरि । रि सरिग० रि-

सं रिस धधप8 पपध पगग ॥ रि० रिगगरिरि ससरि

गगरि । रिसस ※ गपगपध ॥ सधसरिसरि ॥ ४४ ॥

६ मृ० प्र० घ० । १ प्र० श्म० । २ । १ आ० । २ । १ आ० । २ । ३ । दोलनद्वयं श० द्वयं । ३ । ५ । ६ प्र० घ० । १ क० आ० । २ क० घ० । ३ क० घ० दो० श० । २ क० । १ क० । २ क० आ० । १ क० घ० । ६ घ० । हत्यं ६ घ० । ५ घ० श० ॥ ॥ छ ॥ ५ । ५ । ६ । आ० । ५ घ० । ३ घ० । हत्यं ३ घ० । २ घ० श० । २ । ३ आ० वि० । ३ । २ आ० । २ घ० १ । २ आ० घ० । ३ घ० दो० । ३ । २ आ० । २ घ० । १ घ० । १ पञ्चं । ३ । ५ । ३ । ५ । ६ । १ क० । २ क० । २ क० ॥ ४४ ॥

संगरिस ※ ललितासरिगम । पगरिगरिसानि० सरि-

**गपमगरिगरिस * गमपगमधनिसरिंनिधम । गरिरि-सनिं ० रिगरिगपम० गपरिस* ॥ ४५ ॥**

१ क० । ३ क० । २ क० । १ । क०। पञ्चं । ललिता सारिगेति॥ इयं तु पूर्वोक्ते मालवगौडीये मेले प्रभातकाले॥ १ । २ । ३ । ४ । घ० । ५ घ० ३ । २ आ० । ३ आ० । २ आ० घ० । १ घ० । ७ मृ० घ० श० । १ । २ । ३ । ९ आ० । ४ । ३ घ० । २ घ० । ३ । २ । १ पञ्चं । ३ । ४ । ५ । ३ । ४ । ६ आ० । ७ । १ क० घ० । २ क० घ० । ७ । ६ । ४ । ३ घ० । २ घ० । २ । १ । ७ मृ० श० ॥ १ ॥ छ ॥ छ ॥ २ । ३ । २ आ० । ३ । ५ आ० । ४ श० । २ । १ पञ्चं ॥ ४५ ॥

**एष वसंतः। स० रिगं० म० धप० मप० मम० मधमधनिं' धधनिं' संसं०। संमंगंगं रिंसंनिंसं०निध मध । मधनि ॥ ध० धनिं' संसं संनिधप० मप० ॥ ४६ ॥**

एष वसंतः सारिगेति ॥ अयं तु पूर्वोक्ते स्वस्यैव मेले प्रभातकाले ॥ १ श०।२ ३ कं० द्व्यंश० । ४ श० । ६ । ९ श० । ४ । ५ श० । ४ । ३ कंद्व्यं० । ४ । ६ । ७ क० । ६ । ६ । ७ आ० कं० घ० घ ॥ क० घ० १ कठि० श० । १ क० । ४ क० मु० । ३ क० आ० । ३ क० । २ क० घ० । ९ क० घ० । ६ त्र्यं ७ घ० । १ क० घ० ३ । ७ घ० । ६ ग० । श० । ४ । ६ । ४ । ६ । ७ कं० ह० । ६ श० । ६ । ७ कं० ह० घ० । १ क० घ० । १ क० घ० । १ क० श० । १ क० । ७ ६ । ९ श० । ४ । ५ श० ॥ ४६ ॥

मगं॰ मगसरिसि* स॰ निधप । मप॰ मगंमं । धप॰
मप॰ मगंम॰ मग गरिस * हिंदोलः । सगसगम॰
धां मधानिसं॰ गंसंगंनिसंगं॰ सनिधध॰ ॥ ४७ ॥

४ । ३ कं॰ द्द॰ । ४ । श॰ । ४ मु॰ । ३ आ॰ । ३ घ॰ । २ घ॰
१ घ॰ पञ्चं॰ । १ क्षु॰ कठिनांता ॥ ७ । ६ । ५ । ४ । ५ श॰ । ४
३ क॰ द्द॰ । ४ श॰ । ६ । ५ श॰ । ४ । ३ कं॰ द्द॰ । ४ श॰
४ मु॰ । ३ आ॰ ॥ छ ॥ ३ घ॰ । २ घ॰ । १ । घ॰ पञ्चं॰ ॥ हिं-
दोलः सगसगेति ॥ अयं वसंतमेले प्रभातकाले ॥ ११ । ३ । १ । ३ । ४ श॰
६ । ४ । ६ । ७ । १ क॰ श॰ । ३ क॰ । १ क॰ । ७ । ६ । ६
श॰ ॥ ४७ ॥

मधमधानि'' धधनिं'' सं॰ संनिध । निध॰ मग॰ मग॰
स* स ॅ निधनिध॰ मग॰ मग॰ स* ॥ ससगगम-
मधधनिनि'' सं॰ सं॰ ॥ निधनिध॰ मग॰ मग॰
स॰ गसगनिं॰ स* ॥ ४८ ॥

४ । ६ । ४ । ६ । ७ ॥ वि॰ । ६ । ६ । ७ वि॰ । १ वि॰ । १
वि॰ । १ कं॰ आश॰ । १ क॰ । ७ । ६ प्र॰ । ७ । ६ श॰ । ४
३ प्र॰ श॰ । ४ । ३ श॰ । ९ पञ्चं । १ क्षुकठिनांता । ७ । ६ प्र॰
७ । ६ प्रा॰ । ४ । ३ प्र॰ श॰ । ४ । ३ । १ पञ्चं॰ १ । १ । ३ ।
४ । ४ । ६ । ६ । ७ । ७ कंपद्वयं । १ कश॰ । १ कश॰ । १ क-
ठिन । ७ । ६ प्रतिहतिः । ७ । ६ शमः । ४ । ३ प्रतिहतिः शमः । ४

३ श । १ शमः । ३ । १ । ३ । ७ मृदुताशमः । १ पञ्चं ॥ ४८ ॥

ललितोविभासभेदो । ग० पधस० ग रिं निध० मग०

रिस॰ ग० पधसं० सं ॥ निधा मगरिस॰ सैरिग०

सनिध० । धधनिसरिगग० । ममगमगरि० ग ॥ ४९ ॥

ललितो विभासभेद इति।विभासस्य भेदस्तत्तुल्योऽन्यो ललित इत्यर्थः॥ अयं तु देशीकारमेले प्रभाते । ३ श० । ५ । ६ । १ क० श० । ३ क० २ क० । ७ । ६ श० । ४ । ३ श० । २ । १ पञ्चं । ३ श० । ५ । ६ १ क० श० । १ कदो० द्द० । ७ घ० । ६ घ० श० । ४ घ० । ३ घ० श० । २ घ० । १ घ० पञ्चं । १ वि० । २ घ० । ३ घ० श० । १ वि० ७ मृ० घ० । ६ म० घ० श० । ६ म० । ६ मृ० । नैम्न्यं । ७ मृ० । १ २ । ३ । ३ श० । ४ वि० ४ । ३ । ४ । ३ । २ वि० श० । ३ दो० ॥ ४९ ॥

ममगरि॰ गपं० ध० निधं० नि नि । धपम ग० रि-

सं० ॰ सरिग० सनिध० धं मनिधम ॥ गरिसनि-

ध० धं धनिं सरिगग० ममगम गरिं० गमध० मग ग०

रिसं॰ ॥ ५० ॥

४ ओ—दो० ।४।३।२।१ पञ्चं । ३ । ४ प० कं० द्द० श० ६ श० ७ वि० । ७ द्रु० । द्रु० । ४ द्रु० । ३ श० । २ घ० । १ श० पञ्चं । १ वि० । २ घ० । २ घ० ३ घ० श० । १ वि० । ७ मृ० घ० ६ मृ० घ० । श० । ६ मृ० द्रु० मध्यमांता ४ । ७ । ६ प्र० । २ प्र०

१ प्र० । ७ मृ ठ प्र० । ६ मृ० प्र० श० । ६ मृ० ६ मृ० नै० ७ मृ० । १ । २ । ३ । ३ श० । ४ वि । ४ । ३ । ४ । ३ । २ वि० श० । ३ दो० । ४ घ० । ६ घ० श० । ४ घ० । ३ घ० । १ श० २ घ० । १ घ० पञ्चं ॥ ५० ॥

जैताश्रीः सगरिसं० गप० ॥ ममग० रिस० पम० पग० रिस० पमगरिस० म ॥ गरि स० ग० रिस* गगमप-सिसं० । गं० रिसं० नि सं० संनिधप० म० संनि धसं ॥ ५१ ॥

जैताश्रीः सगरिसेति । इयमपि पूर्वोक्ते देशीकारमेळे प्रथमयामे । १ । ३ २ । १ दो० श० । ४ परतायानिजता । ४ । ३ आदृश० । २ । १ श० ५ । ४ श० । ५ । ३ श० । २ । १ शमः । ९ डु० । ४ डु० । ३ डु० । ३ डु० । २ द्रु० । १ श० । ४ द्रु० । ३ द्रु० । २ द्रु० १ श० ३ श० । १ । २ डु० । १ द्रु० । पञ्चं । ३ दो० । ३ दो० । ४ । ५ ७ आ० । १ क० श० । ३ क० श० । २ क० १ क० श० । ७ प० श० १ क० दो० । १ क० । ७ । ६ । ५ श० । ४ प० श० । १ क० ७ । ६ । १ क० ॥ ५१ ॥

निधप० । म० निधप० म० गम० निध । प० म8 ग-रिस* धनि० सग गम० ग ॥ रिस* सगमा । प० पप म० म० मग० रिस० स* । ग० मपनि० गं० रि-

सँ० नि सँस निधप० म ॥ ५२ ॥

७ । ६ । ५ श० । ४ प० श० । ७ । ६ । ५ श० । ४ प० श०
३ । ४ दो० श० ७ । ६ । ५ श० । ४ नि० द्रु० प० या एकयैव हत्या
॥ ३ ॥ २ । १ पञ्चं ॥ ६ मृ० ७ मृ० प० श० । १ । ३ मा० । ३
४ आ० वि० मी० ॥ ३ ॥ २ । १ पञ्चं । १ । ३ । ४ । ५ श०
५ वि० । ५ । ४ आ० प० श० ४ । ५ आ० प० श० । ५ दो० श०
४ घ० । ३ घ० श० । २ घ० । १ घ० श० । १ पञ्चं । ३ श० । ४
५ । ७ पर० श० । ३ क० श० । २ क० । १ क० श० । ७ प० । १
क० दो० । १ क० । ७ । ६ । ५ श० ४ ॥ ५२ ॥

गग० रिस० पंनि० स॰ धनाश्रीगंमपपमगस० पं-

पु मगस० सप० मुप० पु ॥ मगस॰ गसगमपानि ॥

पनिसँ० सुनिपमगस॰ गगमप० मपनिध ॥ ५३ ॥

३ दो० । ३ श० । २ । १ श० । ५ मृ० प० श० । १ पञ्चं । ध-
नाश्रीगंमपपमेति ॥ एषा पूर्वोक्ते श्रीरागमेले प्रथमयामे ॥ ३ । ४ । ५ । ५
नै० । ४ । ३ । १ श० । ५ । ५ नै० । ४ । ३ । १ श० । १ । ५
श० । ४ प्र० । ५ श० । ५ नै० । ४ । ३ । १ पञ्च ३ । १ । ३
४ । ५ । ७ । १ क० श० १ क० नै० । ७ । ५ । ४ । ३ । १ पञ्चं ३
दो० । २ दो० । ४ । ५ श० ४ प्र० । ५ । ७ । ५ ॥ ५३ ॥

निसँगु सँनिपगस॰ सगस । गमपमपानि निसँ० पगँसँ-

नि गंसं ॥ निसंनिगसंनि संनिपसं ॥ निपनिपसं नि-

पमगमगपमग ॥ ५४ ॥

७ वि० । १ क० । ३ क० नै० । १ क० । ७ । ५ । ४ । ३ । १ पद्मं ॥ १ । ३ । १ । ३ । ४ । ५ । ४ । ५ । ७ । ५ । ७ १ क० श० पश० । ३ क० । १ क० । १ क० । ७ । १ क० । ७ ३ क० । १ क० । ७ क० । ७ । ३ क० । १ क० । ७ । १ क० । ७ ५ । ७ । ५ । १ क० ७ । ५ । ४ । ३ । ४ । ३ । ५ । ४ । ३ ५ ॥ ५४ ॥

मगपमगमगसप० पगं० सं । गंसंगंसं गंसं निपमग स-

प० मपम० ॥ पमपस पनिपनिसंगंसंगं निप मग सस-

प० * ॥ ५५ ॥

४ । ३ । ५ । ४ । ३ । ४ । ३१ । ५ श० ५ । ३ क० श० । १ क० प्र० द्रु० ३ क० ड्रु० । १ क० प्रड्रु० । ३ क० ड्रु० । १ क० प्र० द्रु० द्रु० । ३ कद्रु० । १ क० प्र० ड्रु० । अत्र पथयथा आवृत्तिबाहुल्यं आवृत्तिबाहुल्यं ॥ तथा तथा रसा॥आर्या छंदोनुरोधेन तु संक्षिप्तं एवमेव जातीयके अन्यत्र पुरतः ॥ ७ प्र० । ५ प्र० । ४ प्र० । ३ प्र० । २ । ५ श० । ४ प्र० द्रु० ५ द्रु० । ४ प्र० द्रु० । ५ द्रु० । ४ प्र० द्रु० । ४ द्रु० ४ प्र० द्रु० । ५ । ७ । ५ । ७ । १ क० ३ क० द्रु० । १ क० प्र० द्रु० । ३ क० द्रु० । १ क० प्र० द्रु० । ३ क० द्रु० । १ क० प्र० द्रु० ३ क० द्रु० १ क० प्र० द्रु० ३ क० द्रु० । १ क० प्र० द्रु० । ३ क० द्रु० १ क० प्र० द्रु० ७ प्र० । ५ प्र० । ४ प्र० ३ प्र० १ । १ । ५ श० पद्म ॥ ५५ ॥

ग म प नि संप० । नि सं० गंमं पंमंगं० रिंसंगं

रिंनि० सं० प० निसं प० सं निपमग म ॥ पमग०

रिस* सपमप गमप । म ग० रिस० गरि नि० स०

प० नि नि स* ॥ ५६ ॥

३ प्र० । ४ प्र०।५ प्र० । ७ प्र०।१ कं० । ५ श० ७प्र० । १ कं० श०
३ कं० प्र० । ४ कं० प्र० । ५ कं० ।४कं०।३कं०प्र०श०। २ कं० द्रु०
१ कं० द्रु० । ३ कं० प्र० । २ कं० द्रु० । ७ द्रु० श० । १ कं० श०
५ श० । ७ प्र० । १ क० । ५ श० । १ क० प्र० । ७ । ५ । ४ । ३
४ प्र० । ५ । ४ । ३ प्र० श० । २ द्रु० । १ द्रु० पश्चं । १ । ५ । ४
५ । ३ । ४ प्र० । ५ । ४ । ३ प्र० श० । २ द्रु० । १ द्रु० श० । ३
प्र० । २ । ७ मृ० श० । १ श०। ५ मृ० श० । ७ मृ० प्र० । ७ मृ०।
५ मृ० श० । १ पश्चं ॥ ५६ ॥

भैरवएषध० निसनि रि० । स० ध० नि स० धं । प

म० मध० निस० मग० रि० स* सग०* ॥ मपमप-

ध० मप मग० रिरि ० स* । मधनि ॥ संनिं रिं । सं-

संधनिं सं धम० प ॥ ५७ ॥

भैरवएष धनिसनीति । अयंपूर्वोक्तस्वस्यैवमेलेप्रातःकाले । ६ मृ० वि०
श०।७मृ० १।७मृ०।२ दोलनद्रुसंश० । १ श०। ६ मृ० वि० श० । ७ मृ०

दो० । ३ कं० द्रु० श० । ४ श० । ५ श० । ४ प्र० । ५ श० । १ ।
३ । ४ । ५ । ६ । ७ । १ क० ॥ १३४ ॥

रिं सं रिं ० निसं निसं निसं रिं ० सं नि० धि" ० ध०

प० मप० रिं सं० नि० ध० प० मं प० सं नि० ध० ॥

प० मप० गमपधनिधप० पनि० ध० प० मपपमरि-

स० रिगमरि० स० निं ० ॥ १३५ ॥

२ क० । १ क० । २ क० । २ क० आ० श० । ७ । १ क०
आ० प्र० । २ क० घ० श० । ७ । २ क० आ० श० । १ क० । ७
श० । ६ दो कं० द्रु० श० । ६ श० । ५ श० । ४ प्र० । ५ श० । २
क० प्र० द्रु० । १ क० द्रु० श० । ७ श० । ६ श० ५ श० । १ क०
प्र० द्रु० । ७ द्रु० श० । ६ श० । ५ श० । ४ प्र० । ५ श० । ३ ।
४ । ५ । ६ । ७ मृ० । ६ आ० घ० । ५ घ० श० । ५ । ७ आ०
श० । ६ श० । ५ श० । ४ घ० । ५ श० । ४ प्र० । ५ श० । ५
नै० । ४ । २ । १ श० । २ । ३ आ० घ० । ४ घ० । २ श० । १
अनु० श० । ७ मृ० आ० अह ॥ १३५ ॥

धं ० पं० मंपं० पंनि० धंपंमं० पंमं० मं० रि" ० स *
⊙
हंमीरस्तु गमप० धिं प० मप० प० ॥ पि ० मंगं: रि०

* गमप० धिं प० मप० पमगं० रिस * गमप०

धै ० रि० संनिधंप० ॥ १३६ ॥

६ मृ० आ० अह० श० । ५ मृ० आ० श० । ४ मृ० आ० । ५

मृ० शा० । ५ मृ० । ७ मृ० आ० शा० । ६ मृ० । ५ मृ० । ४ मृ० मृ० शा० । ५ मृ० । ७ मृ० आ० शा० । ५ मृ० नै० । ४ मृ० । २ मृ० शा० । १ आ० शा० । ५ मृ० आ० शा० । ५ मृ० नै० । ४ मृ० । २ मृ० शा० । १ मृ० पञ्चम् ॥ हंमीरस्तु गमपधेति ॥ अयंतु स्वस्यैव मेले रात्रौ ॥ ३।४।५ शा० । ६ दो० द्रु० । ५ शा० । ४ प्र० । ५ शा० । ४ । ५ आ० वि० ४ घ० । ३ घ० कं द्रु० शा० । २ घ० । १ घ० पञ्चं । ३ । ४ । ५ शा० । ६ दो० द्रु० । शा० । ४ प्र० । ५ शा० । ४ घ० । ३ घ० कं० द्रु० शा० । २ द्रु० । १ द्रु० पञ्चं । ३ । ४ । ५ शा० । ६ वि० शा० । २ क० मु० । १ क० । ७ घ० । ६ घ० कं० द्रु० । ५ शा० ॥ १३६ ॥

मप० मॅ॒प० मगं० रिस * सरि॒स॒० स गं॒० रि० स-
निं धं० पंमं॒० पंमं॒० स० * ससगमपधेध ॥ निनि०
रिं संनिधपमगं० मपॅगं० रिंसस * सरिसरिस गेग
मैं मपप ॥ १३७ ॥

४ अनु० । ५ शा० । ४ । ५ आ० वि० शा० । ४ घ० । ३ घ० कं० द्रु० शा० । २ । १ पञ्चं । १ । २ आ० । १ आ० शा० । १ । ३ आ० कं० ह० शा० । २ शा० । १ । ७ मृ० घ० । ६ मृ० घ० शा० । ५ मृ० । ४ मृ० आ० शा० । ५ मृ० शा० । १ पञ्चं । १ क० । १ नै० । ३ । ४ । ५ । ५ । ६ दो० । ६ । ७ प० । ७ प० । ७ प० । ७ प० शा० । २ क० ॥ १ क० । ७ । ६ । ५ । ४ । ३ वि० शा० । ४ । ५ स्प० द्रु० । ३ द्रु० कं० शा० । २ घ० । १ घ० । १ पञ्चं । १ द्रु० । २ द्रु० । १ द्रु० । २ द्रु० । १ द्रु० । ३ दो० । ३ । ४ दो० । ४ । ५ दो० । ५ ॥ १३७ ॥

मपमपमगं० मॅ॒पॅ॒पमॅ॒ गं० रि स * सरिगमप० पं-

धि॰ सांरिं॰ सं॰ गं८ गंरिं सांरिं सं ॥ निं॰ धपं॰ मप-
धि॰ रिं सांरिं संनिं॰ ध प॰ मपसुं निधप॰ मप॰
प पसं॰ प॰ म ॥ १३८ ॥

४ । ५ । ४ । ५ । ४ । ३ वि॰ श॰ । ४ वि॰ । ५ आ॰ वि॰ । ५ । ४ आ॰ वि॰ । ३ कं॰ द्रु॰ श॰ । २ । १ पद्मं । अस्य रूपस्य 8 घ॰ षड्जः कर्तर्या वादनीयः ॥ १ । २ । ३ । ४ । ५ श॰ । ५ घ॰ । ६ घ॰ दो॰ श॰ । १ क॰ । २ क॰ श॰ । १ क॰ श॰ । ३ क॰ दो॰ । ३ क॰ । २ क॰ । १ क॰ । २ क॰ आ॰ । १ क॰ । ७ आ॰ । १ क॰ । ७ आ॰ । कं॰ द्रु॰ श॰ । ६ घ॰ । ५ घ॰ श॰ । ४ । ५ । ६ आ॰ वि॰ श॰ । २ क॰ । १ क॰ । २ क॰ । आ॰। १ क॰ । १ क॰ घ॰ । ७ घ॰ क॰ द्रु॰ श॰ । ६ घ॰ । ५ घ॰ श॰ । ४ । ५ । १ क॰ नै॰। ७ आ॰ । ६ घ॰ । ५ श॰ । ४ । ५ श॰ । ५ वि॰ । ५ वि॰ । १ क॰ आ॰ श॰ । ५ दो॰ श॰ । ४ घ॰ ॥ १३८ ॥

गं॰ रिस॰ सरि समगे॰ ०रिस * केदारोऽयं गमप॰
म पं॰ प॰ गमॅगरि८॰ स॰ ॥ निं सनिं रिं८॰ स *
गमप॰ संसुं निध प॰ गमप॰ गमॅगरि८ स* गमप॰
संनि ॥ १३९ ॥

३ घ॰ कं॰ द्रु॰ श॰ । २ घ॰ । १ घ॰ श॰ । १ । २ आ॰ । १ आ॰ । १।३ आ॰ वि॰ । नि॰ श॰ । २ आ॰श॰ । १ पद्मं । केदारोऽयं गमपेति । अयं तु हंमीरस्यैव मेले रात्रौ ॥ ३ । ४ । ५ श॰ । ४ । ५ दो॰ द्रु॰ श॰ । ५ श॰ । ३ । ४ स्य॰ द्रु॰ । ३ द्रु॰ घ॰ । २ घ॰

वि० श० । १ श० । मृ० । ७ मृ० । १ । ७ मृ० । २ दो० परताया नि० श० । १ पञ्चं । ३ । ४ । ५ श० । १ क० । १ क० नै० । ७ । ६ । ५ श० । ३ । ४ आ० घ० । ५ घ० श० । ३ । ४ स्प० । ३ । २ वि० श० । १ पञ्चं ॥ ३ । ४ । ५ श० । १ क० । ७ ॥ १३९ ॥

धसनि धप० गमप० गमगरि८० स॰ गमपधट नि-

सं निध प० मग० गगप मग० मग रिसं०॥ निं सनिं

ग० रि८० स ॰ गम प० सनिधप० मग० रिस०

निं सग० रि स ॰ ॥ १४० ॥

६ । १ क० । ७ । ६ । ५ श० । ३ । ४ आ० घ० । ५ घ० श० । ३ । ४ स्प० । ३ घ० । २ घ० वि० श० । १ पञ्चं । ३ । ४ । ५ वि० । ६ वि० । ७ । १ क० वि० । ७ । ६ घ० । ५ घ० वि० श० । ४ घ० । ३ घ० श० । २ दो० । ३ दो० । ५ आ० । ४ घ० । ३ घ० वि० श० । ४ स्प० । ३ श० । २ घ० । १ घ० वि० श० । ७ मृ० । १ । ७ मृ० । ३ श० । २ आ० दो० श० । १ पञ्चं । ३ । ४ । ५ श० । १ क० । ७ आ० । ६ घ० । ५ घ० श० । ४ घ० । ३ घ० श० । २ घ० । १ घ० श० । ७ मृ० । १ । ३ श० । २ आ० वि० घ० । १ घ० पञ्च ॥ १४० ॥

अयमेवमेवंरूपैः कैश्चिन्मल्लारिवेलउद्धार्यः ॥ तदनु विहं-गड इच्छं रिममं० मपमपनिधपमपमगं० ॥ १४१ ॥

अयमेवेति ॥ अयं केदार एव मेवरूपैरेभिरेव रूपैः कैश्चिद्वादकैर्मल्लारिमेले उद्धार्यः । वादयितुमर्हः ॥ तदनु विहंगड इच्छमिति ॥ अयमपि हंमीरमेले

रात्रौ च ॥ २ । ४ । ४ कं० श० । ४ । ५ । ४ आ० । ५ । ७ । ६ । ५ । ४ । ५ । ४ आ० । ३ कं० श० ॥ १४१ ॥

रिस निसं० * रिपमपम० गं० रिस नि० पं० पं-

निंसनिंसरिमग० रिससनिंस * सारि ॥ सरिमग०

रिससनिंस * रिमम० गरि गरि० पमग० रिसनि०

स * रिपम ॥ १४२ ॥

२ । १ । ७ मृ० । १ कं० द्रु० श० पद्मं । २ प्र० घ० । ४ आ० । ५ । ४ आ० श० । ३ कं० द्रु० श० । २ । १ । ७ । ५ मृ० । १ । ७ मृ० । १ । २ । ४ । ३ आ० घ० श० । २ घ० । १ घ० । १ । ७ मृ० । १ पद्मं । १ । २ । १ आ० । २ घ० । ४ घ० । ३ आ० श० २ घ० । १ घ० । १ । ७ मृ० । १ पद्मं । २ । ४ आ० । ४ कं० श० । ३ घ० २ घ० । ३ । २ आ० श० । ५ । ४ । ३ आ० श० २ घ० । १ घ० । ७ श० । १ पद्मं । २ वि० । ५ । ४ ॥ १४२ ॥

गं० रिसनिं० स * पंनिंसानि० रिप म ग-

रिसनिं० * रिमम० पधनिध० मगमं० ॥ गरि गरि

पमग० सिससनिं० स * रिपमग० रिसनिं० स०

निंधंपंनिं निं० स * ॥ १४३ ॥

३ कं० श० । २ । १ । ७ मृ० श० । १ पद्मं । ५ मृ० । ७ मृ० ।

१ । ७ मृ० । १ श० । २ वि० । ५ । ४ आ० । ३ प्र० । २ घ० । १ घ० । ७ मृ० श० । १ पञ्च । २ । ४ आ० । ४ कं० श० । ५ । ६ स्प० । ७ । ६ आ० आह० श० । ५ कं० श० । ४ घ० । ३ घ० । ४ कं० श० । ३ घ० । २ घ० । ३ । २ आ० । ५ । ४ आ० । ३ अनु० श० । २ घ० । १ घ० । १ । ७ मृ०श० । १ पञ्च । २ घ० । ५ घ० । ४ आ० अ० । ३ श० । २ । १ । ७ मृ० श० । १ श० । ७ मृ० ६ मृ० आ० आ० । ५ मृ० आ० । ७ मृ० आ० । ७ मृ० श० । १ पञ्चं पञ्चं ॥ १४२ ॥

शुभकृदथ मालवश्रीः नि धम० पम० धैं निसंनि गंरिं-

गंसंनिधनिसं ॥ सं मं गं सं रिं गं सं निधनिसं नि

धपप पनि धग० मग० रिस * सगरि ॥ १४४ ॥

शुभकृदथ मालवश्रीरिति । अथाऽऽरंभे शुभकृत् । गायनादौ गीता सती कल्याणकारिणीत्यर्थः । इयंतु पूर्वोक्ते श्रीरागस्य मेले सर्वस्मिन्काले ॥ ७ प्र० । ६ । ४ श० । ५ । ४ श० । ६ वि० । ७ आ० । १ क० । ७ । ३ क० । २ क० । ३ क० आ० । १ क० । ७ । ६ । ७ । १ क० । १ क० । ४ क० । ३ क० । १ क० । २ क० । ३ क० । १ क० । ७ । ६ । ७ । १ क० । ७ प्र० । ६ । ५ । ५ अनु० । ५ । ७ आ० । ६ आ० घ० । ४ घ० श० । ४ । ३ । प्र० श० द्रु० । १ द्रु० पञ्च । १ । ३ आ० । २ आ० ॥ १४४ ॥

गमंनिध निधममग० रिस० गरि निं० स * पप

निसंगंरिंसंनिधपम ग० रिस० ॥ सगम० पंपमग०

रिस * संनिध म० मनिसं० गंरिंसं निधम गारिस

स ॥ १४५ ॥

३ घ० । ४ घ० । ७ घ० । ६ आ० अ० । ७ । ६ आ० घ० ।
१ पञ्चं । ५ द्रु०। ५ नै०द्रु०। ७ द्रु०। १ क०द्रु०।३क०द्रु०।२ क० द्रु०
। १ क० द्रु० । ७ प्र० द्रु० । ६ द्रु० । ५ द्रु० । ४ द्रु० । ४ द्रु० ।
३ प्र० श० । २ द्रु० । १ द्रु० श० । १ । ३ । ४ श० ५ द्रु० दो० ।
५ द्रु० । ४ द्रु० । ३ प्र० श० । २ । १ श० पञ्चं । १ क० । ७ अ-
नु० । ६ घ० । ४ घ० श० । ४ । ७ प्र० । १ क० श० । ३ क० प्र०
द्रु० । कं० २ क० द्रु० । १ क० द्रु० । १ । ७ प्र० द्रु० । ६
द्रु० । ४ द्रु० । ३ प्र० द्रु० । २ द्रु० । १ द्रु० । १ ॥ १४५ ॥

गमनिध निध निध ममग० रिस * पं मग० रिस०

स० गमपं० मग० रिस० स० गम० ॥ सम० ग०

रिस * पं निसं० निनि धप० मपमग० रिस०

सगरिगम० गं० ॥ १४६ ॥

३ । प्र० । ४ । ७ । ६ आ० अ० । ७ । ६ आ० घ० । ४ घ० ।
४ । ३ प्र० श० । २ द्रु० । १ द्रु० । पञ्चं । ५ वि० । ४ । ५ वि०
श० । ४ । ३ प्र० श० । २ द्रु० । १ द्रु० श० । १ श० । ३ प्र० ।
४ । ५ विं० श० । ४ । ३ प्र० श० । २ द्रु० । १ द्रु० श० । १ श०
। ३ प्र० । ४ श० । १ । ४ श० । ३ अनु० श० । २
द्रु० । १ द्रु० पञ्चं । ५ वि० । ७ । १ क० श० । ५ वि० । १क०आ०

श० । ७ वि० । ७ घ० । ६ घ० । ५ घ० श० । ४ । ५ आ० वि० । ४ । ३ प्र० श० । २ द्रु० । १ द्रु० । १ द्रु० श० । १ । ३ आ० । २ आ० । ३ घ० । ४ घ० श० । २ अनु० श० ॥ १४६ ॥

रिस * पमप स निधप० पमय नि स स निधप०

पमपानिधानि स सनिधप० ॥ पमप मगम० मगरिगमनि

धनिध पमग० रिस० मपमग० रिस * ॥ १४७ ॥

२ द्रु० । पञ्चं । ५ वि० । ४।५ वि० । १ क० नै० । ७ । ६ । ५ श०। ५ वि०। ४ । ५ वि० । ७ । १ क०।१क० नै०। ७ । ६ । ५ श० ५ वि० । ७ । ६ । ७ । १ क० । १ क० नै० । ७ । ६ । ५ श० । ५ वि० । ४ । ५ वि० । ४ । ३ अनु० । ४ श० । ४ । ३ अनु० । २ आ० । ३ घ० । ४ घ० । ७ घ० । ६ आ० अह० । ७ । ६ आ० । ५ घ० । ४ घ० । ३ श० । २ । १ श० । ३ प्र० । ५ । ४ आ० अ० । ३ आ० अह । २ । १ पञ्चं ॥ १४७ ॥

धवला सगमप०मगम० ग० रि सनि० सगमगमपमप

ममग०॥रिसनि० स * गमपनिसं सं० गं०० सनिसनि-

ध पमग ० गमगगमप० मगरिसस * ॥ १४८ ॥

धवला सगेति । इयमपि पूर्वोक्ते श्रीरागस्यैव मेले । सर्वस्मिन्काले ॥१। ३ । ४ । ५ मु० श० । ४ घ० । ३ घ० । ४ आ० श० । ३ अनु० श० । २ आ० । १ घ० । ७ मृ० घ० श० । १ । ३ । ४ । ३ आ० ।

४ । ५ । ४ आ० । ९ मृ० । ४ घ० । ३ घ० श० । २ द्रु० । १ द्रु० घ० । ७ मृ० घ० श० । १ पद्मं । ३ । ४ । ५ । ७ घ० । १ क० घ० । १ क० श० । ३ क० पी० श० । १ क० आ० वि० । ७ । १ क० आ० । ७ वि० । ६ । ९ । ४ । ३ श० । ३ । ४ आ० । ३ । ४ । ९ मु० श० । ४ । ३ अनु० । २ घ० । १ घ० १ पद्मं ॥ १४८ ॥

सगमप० पममप० पमग० रि सनि० सगमग० गमप

म० निधंपम० पमग०० ॥ रिस० * समग० रिसानि० ०

गमगम प मपमग० गमनिध पमग० रिस ॥ १४९ ॥

१ । घ० । ४ घ० । ५ घ० श० । ५ । ४ आ० । ४ । ५ आ०श० । ९ । ४ आ० अ० । ३ आ० । श० । २ घ० । १ घ० । ७ मृ० घ० श० । १ । २ आ० घ० । ४ घ० । ३ आ० श० । ३ । ४ आ० घ० । ५ घ० । ४ आ० श० । ७ । ६ आ० घ० । ९ घ० । ४ घ० श० । ५ । ४ आ० अ० । ३ आ० श० । २ घ० । १ घ० श० पद्मं । १ । ४ आ० । ३ आ० अ० श० । २ । १ घ० । ७ मृ० घ० श० । ३ । ४ आ० । ३ आ० । ४ घ० । ५ घ० आ० । ५ आ० । ४ आ० घ० । घ० । ३ घ० पी० । ३ । ४ आ०घ० । ७ घ० । ६ आ० अ० अ० । ५ आ० अ० । ४ आ० घ० । ३ घ० श० । २ द्रु० । १ द्रु० ॥ १४९ ॥

एषा तु मुखारी सस धध सरिमम० पनिधपम धपम-

ग० रि८स * गरि०॥गमपधपमगारिऽ० सनिस० रि

गम पमगग० रिरि० सनिनिस * ॥ १५० ॥

एषा तु मुखारी ससेति ॥ इयं तु आत्मन एव मेळे सर्वस्मिन्काले च ॥ १ नै० । ६ मृ० । ६ नै० । १ आ० । २ घ० । ४ घ० । ४ श० ५ घ० । ७ घ० । ६ । ५ । ४ । ६ आ० । ५ । ४ । ३ श० । २ वि० आ० । १ पञ्चं । ३वि०।२ आ० वि० । ३ घ०। ४ घ०। ५।६ आ० । ५ घ० । ४ । ३ । २ आ० वि० श० । १ । ७ मृ० । १ घ० । ३ श० २ आ० वि० श० घ० । ५ वि० । ४ घ० । ३ । १ घ० । १ मृ० घ० । ७ मृ० । १ पञ्चं ॥ १५० ॥

रामक्रीट गेप० धरि० सं० सं रिंगऽ० गं० रिंसं० रिंसंनिधप० धप० प० मगऽ०॥गप० धंसं० सं८ संनि-धप० धप प मगऽ० रिंस० रि० गं० धपमपमगऽ० रिंसं० रि० स० ॥ १५१ ॥

रामक्रीर्गपेति ॥ इयं तु पूर्वोक्ते मालवगौडकमेळे सर्वस्मिन्काले मतांतरे । आनिशी० ॥ ३ । वि० । ५ श० । ६ वि० । २ क० श० । १ क० । २ क० । २ क० । ३ क० ग० श० । ३ क० श० । २ क० द्रु० क० द्रु० श० । २ क० द्रु० । १ द्रु० । ६ द्रु० ५ द्रु० श० । ६ आ० । ५ अनु० श० । ५ श० । ४ द्रु० । ३ द्रु० ग० श० । ३ वि० । ५ श० । ६ वि० । १ क० श० । १ क० वि० । १ क० द्रु० । ७ द्रु० । ६ द्रु० । ५ द्रु० श० । ६ आ० । ५ अनु० । ५ श० । ४ द्रु० । ३ द्रु० ग० श० । २ । १ पञ्चं० श० । २ श० । ३ दो० श० । ६ द्रु० ५ द्रु० । ४ द्रु० । ५ द्रु० । ४ द्रु० । ३ द्रु० ग० श० । २ घ० । १ घ० श० । २ श० ॥ १५१ ॥

स० रि० गं पमगं० मग० रिंसंगपधसं० सं निधप०

मगं० प० गप० गप॥धनि धनि धनि धपंनिप० मगं०

प० मप० मध० प० मगंप० गप० म० स० रि०

गं० धप ममपम ॥ १५२ ॥

१ श० । २ श० । ३ वि० । ५ आ० । ४ घ० । ३ घ० वि० श० । ४ । ३ आ० श० । २ घ० । १ घ० । पद्मं । ३ । ५ आ० । ६ । १ क० श० । १ क० नै० । ७ द्रु० । ५ श० । ४ कं० घ० । ३ घ० श० ५ श० । ३।५ आ० श० । ३ । ५ आ० ६ । ७ आ० । ६ आ० । ४ । ५ । ७ स्य० । ५ श० । ४ कं० घ० । ३ घ० श० । ५ शम । ३ । ५ आहतिशमः । ३।६ आहतिः शमः । ५ शम । ४ क० पित्तत्रर्षण० । ३ घर्षण । ५ शम० । ३ । ५ आहतिः शमः ३ परतायानि० पुनः परता० श० । १ श० । २ श० । ३ दो० श० । ६ द्रु० । ५ । ४ द्रु० । ५ । ४ द्रु० ॥ १५२ ॥

गं० पमधपम गं० रिसंरि० स * ग पधसं८ संनिधं-

पं० मगं० मपमपंधपम० ध० ॥ प मगं० रिसं० रिग-

रि० गंपध८ ध प० पंग० रिसं० गंपधंनि धपंगग०

रि ॥ १५३ ॥

३ दो० श० । ५ द्रु० ६ द्रु० । ५ द्रु० । ४ द्रु० । ३ दो० श० । २ घ० । १ घ० । २ श० । १ पद्मं । ३ । ५ । ६ । १ क० दो० । १ क० । ७ आ० । ६ घ० । ५ घं० दो० श० । ४ घ० । ३ घ० श० । ४ । ५ आ० । ४ आ० । ५ दो० । ६ अनु० । ४ आ० श० । ६

आ० । ५ आ० अ० । ४ आ० अ० । ३ घ० दो० श० । २ घ० । १ घ० श० । २ । ३ आ० । २ आ० श० । ३ घ० । ५ घ० । ६ घ० दो० श० । ६ । ५ आ० । ५ घ० । ३ घ० दो० श० । २ घ० । १ घ० श० । ३ । ५ आ० घ० । ६ घ० दो० । ७ घ० । ६ आ० अ० । ५ घ० । ३ घ० श० । ३ । २ ॥ १५३ ॥

स० सरिग पृ० मग० मग० रिस० स्यादेवं पावको-

ग० ध० प० म० ग० मृ ॥ ध० प० म० ग० रि

गपममम० गृरि० धंसृ० रिग० रि० स ॥ १५४ ॥

१ श० । २ । ३ वि० । ५ आ० दो० श० । ४ घ० दो० श० । ४ । ३ । आ० अ० श० । २ । १ । श० पञ्चं । स्यादेवं पावक एवं स्यात् ॥ मालवगौडीय एव मेले सर्वस्मिन्काले चायम् ॥ ३ श० । ६ । श० । ५ श० । ४ श० । ३ श० । ४ प्र० घ० । ६ घ० श० । ५ श० । ५ श० । ४ श० । ३ श० । २ श० । ३ प्र० घ० । ६ श० । ५ श० । ४ श० । ४ श० । ३ श० । २ । ३ प्र० घ० । ५ घ० । ४ दो० । ४ । दौ० । ४ पी । ३ अनु० । २ आ० श० । १ श० । ६ मृ० । १ आ० श० । २ घ० । ३ घ० श० । २ आ० अ० श० । १ पञ्चं ॥ १५४ ॥

ससंसंधपं० पंधंससारिगग गं० रिगधधप० ग० रि०

सं सैंधवी त्वेवम्॥ रिमपऽ8 निधपम० गरिऽ० रि-

मपं प धप निधपम० गरिऽ० स० ॥ १५५ ॥

१ । १ दो० । १ वि० । ६ मृ० घ० । ५ मृ० घ० श० । ५ मृ० । ६ मृ० आ० घ० । १ हत्यं । १ घ० । २ घ० । ३ आ० । ३ दो० । ३ कं० द्रु० श० । २ आ० । ३ मु० घ० । ६ घ० । ६ मु० । ५ आ० श०। ३ अ० नु०श०।२ आ० श०। १ पद्मं ॥ सैंधवी त्वेवमिति । इयं तु पूर्वोक्ते श्रीरागमेळे सर्वस्मिन्काले च ॥ २ । ४ । ५ ग० श० । ७ आ० । ६ घ० । ५ घ० । ४ घ० श० । ३ घं० २ घ० ग० श० । २ श० । १ कं० पद्मं । २ ग० श० । २ । ४ आ० । ५ वि० । ७ आ० । ५ । ६ आ० । ५ आ० । ७ आ० । ७ आ० । ६ घ० । ५ घ० । ४ घ० श० ३ । २ ग० श० । १ श० ॥ १५५ ॥

ध प धम० पृध सृ * रि रि० मम० प० धध स-

रि८ रिऽ० रि रि रि स० रि सृ रि स धप० ॥ पधपृ-

नि़ धपमारिऽ० रि मृ प नि़० धप० मारि० रि मप-

नि० धपमारिऽ० रिस * ॥ १५६ ॥

६ मृ० वि० । ५ मृ० । ६ मृ० वि० । ४ मृ० आ० घ० । ६ मृ० घ० । १ आ० पद्मं । २ । २ क० द्रु० श० । ४ । ४ श० । ५ कं० द्रु० श० । ६ कं० । ६ कं०। १ क० कं० । १ क०कं० । २ क० ग० । २ क० ग० श० । क० द्रु० कं० । २ क० कं० द्रु० । २ क० द्रु० कं० । १ क०त्रा० । २ क० । १ क०आ०वि० । १ क० । ६ वि० घ० । ५ घ० श० । ५ । ६ । ५ आ० । ७ आ० । ६ घ० । ५ घ० । ४ घ० । २ घ० ग० श० । २ वि० । ४ आ० । ५ वि० । ७ आ० श० । ६ घ० श० । ४ घ० श० वि० । ४ । ५ वि० । ७ श० । ६ । ५ । ४ घ० । २ घ० दो० श० । २ । १ पद्मं ॥ १५६ ॥

आसावरी रिमगरिऽ०म ध०० पम० ग० रिस० रिम-
गरिऽ०म०॥ पधध पम० प पमग० रिस० ध० रि०
स ० निध० पम० स० ※ मपधस० सनिधप० मप
ध० ॥ १९७ ॥

आसावरी रिमेति ॥ इयं तु पूर्वोक्ते मालवगौडमेले सर्वस्मिन्काले च ।२।
।३।२ वि० श० ।४।६ श० पी० ।५ वि० घ० ।४ घ० श०
३ श० ।२।१ श० ।२ आ० ३ घ० ।२ घ० दो० श० ।४ श०
५ दो० ।६।५ आ० दो० ।४ श० ।५ दो० ।५।४।३ श०
२ द्रु० ।१ द्रु० श० ।६ मृ० ।श० ।२ आ० श० ।१ श० ।१
मृ० घ० ।६ मृ० घ० श० ।५ मृ० ।४ मृ० आ० श० ।५ मृ० ।६
मृ० आ० श० ।१ पञ्च ।४ वि० ।५।६।१ क० कं० द्रु० श० ।
१ क० ।७।६।५ कं० द्रु० श० ।४ वि० ।५ आ० ।६॥१५७॥

स० स० नि धप मपध धप प ध० ध पम० ग०
रिस० ध० रि० स० निधपपम० प धस※॥ मपधस-
स० नि सरिग० रिस० ध रि० स० निधप० मप ध-
रि० स० सनिधप० ॥ १५८ ॥

१ क० दो० श० ।१ क० ।७ आ० श० ।६ घ० ।५ घ० श०
४ वि० ।५ वि० ।६।५ आ परताया नि० ।५।६ आ० प० श०
।६ दो० ।५ घ० ।४ घ० श० ।३ श० ।२ द्रु० ।१ द्रु० ।१
श० ।६ मृ० श० ।२ श० ।१ श० ।७ मृ० द्रु० ।६ मृ० द्रु० ।

६ मृ० द्रु० । ६ मृ० द्रु० । ५ मृ० द्रु । ६ मृ० आ० द्रु० । ४ मृ० द्रु० श० । ५ मृ० । ६ मृ० आ० । १ पञ्चं । ४ । ५ । ६ । १ क० । १ क० श० । ७ वि० । १ क० आ० । २ क० । ३ श० । १ श० । २ क० श० । ६ श० । २ क० श० । १ क० श० । ७ द्रु० । ६ द्रु० ५ द्रु० श० । ४ वि० । ५ आ० । ६ । २ क० श० । १ क० । श० १ क० द्रु० । ७ द्रु० । ६ । द्रु० । ५ द्रु० श० ॥ १५८ ॥

मपधसं सनिधम० मप धध प म पपमग० ग० रि-

स * मपधसं० सनि धप ॰॥मपध० सनिधप० मपध०

रिसं गिधपम० पनि धपम० मरिसरि० स ॥ १५९ ॥

४ वि० । ५ आ० । ६ । १ क० । १ क० द्रु० । ७ द्रु० । ६ द्रु० । ५ द्रु० श० । ४ वि० । ९ वि० । ६ वि० । ६ । ९ आ० प० रता- या० नि० । ४ श० । ५ वि० । ९ । ४ । ३ श० । ३ श० । २ । १ पञ्चं । ४ । ४ आ० । ६० क० श० क० द्रु० । ७ द्रु० । ६ द्रु० । ५ द्रु० श० । ४ क० । ९ । ६ श० । १ क० द्रु० । ७ द्रु० । ६ द्रु० । ९ द्रु० । श० । ४ कं० । ५ । ६ श० । १ क० द्रु० । १ क० द्रु० । ७ द्रु० । ६ द्रु० । ९ द्रु० । ४ द्रु० श० । ५ । ७ आ० । ६ आ० घ० । ५ घ० । ४ श० ३ अनु० । २ आ० । १ । २ श० । १ पञ्चं ॥ १५९ ॥

रिगरि मप धधप०० धप म० ग० ग० रिस * पप-

पप मप0 म० गरि० मप० म० ॥ ग० ग० रिस *

म म ममपप धधं स सं सं स निधपम० प० म० ग०

गरिस * ॥ १६० ॥

२ । ३ । २ आ० । ४ । ५ दो० । ६ । दो० । ६ ५ आ० प० श० । ५ । ६ आ० प० श० द्रु० । ६ दो० । ५ घ० । ४ घ० श० । १ श० । ३ अनु० श० । २ द्रु० । १ द्रु० पञ्चं । ५ दो० । ५ । ५ दो० । ५ । ४ प्र० । ५ श० । ४ श० । ३ घ० । २ घ० श० । ४ । ५ परताया स० घा० नि० श० । ४ परताया स० घा०नि०श० । ३ श०। ३ अनु० श० । २ द्रु० । १ द्रु० पञ्चं । ४ दो० । ४ । ४ दो० । ४ । ५ दो० । ५ । ६ दो० । ६ । १ क० दो० । १ क० । १ दो० । १ क० द्रु । ७ द्रु० । ६ द्रु० । ५ द्रु० । ४ द्रु० श० । ५ दो० पी० । ४ श० । ३ श० । ३ श० । ३ द्रु० । २ द्रु० । १ द्रु० पञ्चं ॥१६०॥

रिमपध० प० मप० रिप प मम म० रि० रि० स०

रि०० स * रिमपधधप० संनिधपं ॥ मं रि० धध-

प० मरि० धप मं रि० रि-० सं निधप मम० रि रि०

स० रि०० स * दिगियम् ॥ १६१ ॥

२ द्रु० । ४ द्रु० । ५ द्रु० । ६ द्रु० श० । ५ श० । ४ प्र० । ५ श० । २ । ५ आ० दो० । ५ दो० । ४ । ४ । दो० । ४ प० श० । २ । अनु० दो० । २ दो० । १ प्र० श० । २ श० द्रु० । १ पञ्चं । २ । ४ । ५ दो० । ६ दो० । ६ । ५ आ० प० श० । १ क० द्रु० । ७ द्रु० । ६ द्रु० । ५ द्रु० वि० । ४ वि० । २ श० । ६ दो० । ६ । ५

दो० । ४ वि० । २ अनु० दो० । २ प्लु० क० नांता । १ क० द्रु० । ७ द्रु० । ६ द्रु० । ५ द्रु० । ४ दो० । ४ प० श० । २ अनु० । २ दो० । १ प्र० श० । २ श० द्रु० । १ पद्मं ॥ दिगियमिति ॥ एकदेशोऽयमन्यान्यपि रूपाणि संतीत्यर्थः ॥ १६१ ॥

देवारिगांधारे रिम प० धं० प० प० ग रि० स०
रिम० गरि० स * ससरि० ॥ म प० पप० ममधं प-
म० गरि० स * रिम प० धस० रि० स० निध० प०
म० गरि० स * ॥ १६२ ॥

देवगांधार इति ॥ अयं तु पूर्वोक्ते मालवगौडीये मेले सर्वस्मिन्काले च । २ । ४ । ५ श० । ६ दो० श० । ५ श० । ४ श० । ३ घ० । २ घ० श० । १ श० । २ । ४ श० । ३ घ० । २ घ० श० । १ पद्मं । १ । १ । २ आ० श० । ४ । ५ श० । ५ । ५ श० । ४ दो० । ६ आ० । ५ घ० । ४ घ० श० । ३ घ० । २ घ० श० । १ पद्मं । २ । ४ । ५ श० । ६ वि० । १ क०श० । २ क०श० । १ क०दो०श० । ७ घ० । ६ घ० श० । ५ श० । ४ श० । ३ घ० । २ घ० श० । पद्मं॥१६२॥

सरि० मपपपममधधपध पम० मगरि० स * रिम-
प० धं० सरि ममं० गरि० स० ॥ सनि धधस०
नि० रिस निध प० म० गरि० स० सानि धधस०
नि० रिमगरि स * ॥ १६३ ॥

१ । २ आ० श० । ४ घ० । ५ घ० । ५ । ५ । ४ वि० । ४ वि०
। ६ आ० । ६ । ५ आ० । ६ आ० । ५ आ० घ० । ४ घ० श० । ४
। ३ । २ श० । १ पद्मं । २ । ४ । ५ दो० श० । ६ वि० श० । १
क० । २ वि० । ३ क० वि० । ४ क० श० । ३ क० घ० । २ क०
घ० श० । १ क० श० । १ क० । ७ अनु० । ६ आ० । ६ । १ क०
आ० श० । ७ प० श० । २ क० । १ क० वि० । ७ घ० । ६ घ०
कं० । ५ श० । ४ श० । ३।२ श० । १ श० । १ । ७ मृ० अनु० । ६
१ आ० श० । ७ मृ० प० श० । २ । ४ । २ अनु० । २ आ० घ०
। १ घ० पद्मं ॥ १६३ ॥

मारविका गमप०म० ग०० म प० निधपमग० स*

गमप० स० सुनि धपम० ग०॥ मप० म० निधपमग०

स * निपध म० मपनिध० मगपस० मप० मग०

स * ॥ १६४ ॥

मारविका गमपेति ॥ इयं तु पूर्वोक्ते वसंतभैरवीमेले वा सर्वस्मिन्काले ॥ ३ । ४ । ५ दो० श० । ४ श० । ३ परताया नि० श० ॥ द्रु० । ४ ५ दो० श० । ७ द्रु० । ६ द्रु० । ५ द्रु० । ४ द्रु० । ३ कं० श० । १ पद्मं । ३ । ४ । ५ श० । १ क० श० । १ क० नै० द्रु० । ७ द्रु० । ६ द्रु० । ५ द्रु० । ४ द्रु० । ३ परताया नि० श० । ४ । ५ श० । ४ आ० श० । ७ द्रु० । ६ द्रु० । ५ द्रु० । ५ द्रु० । ४ द्रु० । ३ द्रु० श० १५ । ७ मृ० । ५ । ६ स्प० । ४ । ५ । ४ श० । ४ । ५ आ० । ७ घ० । ६ घ० श० । ५ घ० । ४ । ३ श० । १ श० । ५ मु० श० । ५ । ४ घ० । ३ घ० श० । १ पद्मं ॥ १६४ ॥

गमपधनि धधस० सनिधप म० गऽ० मपम० पध प

मग० ग० स ❋ प नि०० सगम ॥ पमम० पम नि-

प मग० स ❋ गमपम० ध० पम० मप मप० मग०

गस ❋ ॥ १६९ ॥

३ द्रु० । ४ द्रु० । ५ द्रु० । ६ द्रु० । ७ । ६ द्रु० । ६ वि० । ६ वि० । १ क० कं श० । १ क० नै० द्रु० । ७ द्रु० । ६ द्रु० । ५ द्रु० ४ द्रु० श० । ३ ग० श० । ४ । ५ आ० ४ आ० श० । ५ घ० । ६ घ० । ५ आ० आ० । ४ आ० घ० । ३ घ० श० । ३ श० । १ पञ्चं । ५ मृ० । ७ मृ० प्र० श० द्रु० । १ । ३ । ४ । ५ । ४ आ० । ४ घ० । ३ प्प० प० श० । ५ द्रु० । ४ आ० द्रु० । ७ द्रु० । ५ द्रु० आ० । ४ घ० श० । १ पञ्चं । ३ । ४ । ५ । ४ । आ० श० । ६ श० ५ । ४ श० । ४ । ५ स्प० । ७ द्रु० । ५ आ० द्रु० श० । ४ घ० । ३ घ० । १ घ० पञ्चं ॥ १६९ ॥

परजो गमधं० धं० पधप पनिधप० धप० पग० रि-

स ❋ गमपधं० पध० सं० ॥ मं गं० रिसं० निधप०

धम० पग० म० गरिगम० गं० रिगरि रिम० गं०

रिस ❋ ॥ १६६ ॥

परजो गमपधेति । अयमपि पूर्वोक्ते मालवगौडीये मेले भैरवमेले वा सर्वस्मिन्काले च ॥ ३।४।५।६ कं० श० । ६ कं० श० । ५ । ६ । ५ आ० ५।७ आ० । ६ कं० श० । ६ आ० द्रु० । ४ द्रु० श० । ५ आ० द्रु०

। ३ द्रु० श० । २ । १ पञ्चं कं० श० । ५ । ६ श० । १ क० श० । ४ क० श० । ३ कं० कं० श० । २ क० द्रु० । १ क० कं० द्रु० द्रु० श० । ७ । ६ । ५ श० । ६ आ० द्रु० । ४ द्रु० श० । ५ आ० द्रु० । ३ द्रु० कं० । श० । ४ श० । ३ कं० श० । २ । ३ । २ आ० । २ । ४ । ३ कं० श० । २ । १ पञ्चं ॥ १६६ ॥

**रूपाण्येवं मध्यप्राधान्याद्दर्शितानि यान्येषाम् ॥**
**मंद्रे तारे च यथासंभवमिति वादनीयानि ॥ १६७ ॥**

पूर्वोक्तं रूपवादनं मंद्रतारयोरप्यतिदिशति—रूपाण्येवमिति ॥ एषां शंकराभरणादिपरजातरागाणां यानि मध्यप्राधान्यान्मंद्रतारस्थानयोर्यथासंभवमंगत्वे समस्य स्थानस्यांगित्वकल्पनात् ॥ एवं रूपाण्युक्तानि तानि मंद्रे तारे च यथासंभवं वादनीयानि ॥ तेन यथासंभवमनुमंद्रं मध्यं च अंगं कृत्वा मंद्रे प्राधान्येन वादनीयानि ॥ तथा मध्यं अनितारं च यथासंभवं अंगं कृत्वा तारप्राधान्येन वादनीयानीत्यर्थः ॥ १६७ ॥

**उक्तं रूपमनेकं तत्तद्रागस्य नादमयमेवम् ॥**
**अथ देवतामयमिह क्रमतः कथये तदैकैकम् ॥ १६८ ॥**

एकैकस्यानेकतयोक्तानि नादमयरूपाणि नियमयन्नैकैकदेवमयरूपं वक्तुं प्रतिजानाति—उक्तं रूपमिति ॥ इह रागस्य तत्तन्नादमयमनेकं रूपमेवमुक्तम् ॥ अथ देवतामयं एकैकं तद्रूपं क्रमतः । तेनैवोद्देशक्रमेण कथये ॥ १६८ ॥

**गलराजिकमलराजिर्भाले भसतीरतः सदानृत्ये ॥**
**सुंदरगौरः शोणांबरधरणः शंकराभरणः ॥ १६९ ॥**

तान्येवं शंकराभरणादिपरजातानां एकपंचाशतो रागाणां रूपाण्यार्याणा-

मेकपंचाशताऽऽह–गलराजीत्यादि॥ तत्र स्पष्टार्थान्यपि कतिचनपदानि पाठदार्ढ्याय ध्रियते ॥ शंकराभरणः ॥ गलराजिकमलाराजिः॥ कंठशोभिकमलमालः ॥ भाले ललाटे भसती भस्मवान् ॥ सदानृत्ये रतः सुंदरगौरः सुंदरः सन् गौरवर्णः ॥ शोणांबरधरणः रक्तवस्त्रधारकः तधरण इति कृत्यल्युट् इति बहुलं ग्रहणात्कर्तरि ल्युट् ॥ १६९ ॥

**वेलावलीविनीला तालीवनचारिणीतरलहारा ॥**
**तरुणान्वेषणकरुणां करतलधृततद्दलाभरणा ॥ १७० ॥**

वेलावली विनीला नीलवर्णा तरुणान्वेषणकरुणां भर्तर्गवेषणेन करुणां यथातथा तालीवनचारिणी तरलहाराः इतस्ततो देहविक्षेपणात् चंचलहारा ॥ करतले धृतं तद्दलाभरणं तालीपत्रनिर्मिताभरणं शेखराख्यं यथा ॥ देहविक्षेपणादेव शिरसोगलितं कांतरचित्तं तद्दलशेखरं तत्प्रेम्णा करे धृतवतीत्यर्थः । उक्ता नायका ॥ १७० ॥

**दोलालोला विपिने तरलितवलयं विभूष्य भूपाली ॥**
**कांते प्रसिताऽत्यंतं कुंकुमपीता स्मराद्भीता ॥ १७१ ॥**

भूपाली कुंकुमपीता कुंकुमवद्गौरी ॥ विपिने विभूष्य आत्मानं मंडयित्वा कांतेऽत्यन्तं प्रसिता उत्सुका स्मरात् भीता कामातुरा ॥ दोलालोला कालपरिकलनार्थं दोलया चंचला ॥ यद्वा दोलेव लोला चंचला ॥ अत्यौत्सुक्यात् नैकत्र स्थायिनी ॥ तरालितवलयं चंचलकंकणमिति उभयपक्षयोरपि क्रियाविशेषणम् ॥ वासकसज्जा नायिका ॥ १७१ ॥

**नीराजयत्युमेशं दीपैरनिशं निशात्यये ललिता ॥**
**विविधालंकृतिमिलिता कलितश्वेतांबरा गौरी ॥ १७२ ॥**

ललिता विविधालंकृति मिलिता नानालंकारैः संगता ॥ कलितश्वेतांबरा

गौरी गौरवर्णा पार्वत्यंशभूता वा ॥ निशात्यये उषःकाले दीपैः कर्पूरादिदीपकैरनिशं प्रत्यहमुमेशं शंकरं नीराजयत्यार्त्तिक्येन नीराजयति ॥ १७२ ॥

**केशगकिंशुक एष प्रवेशिताम्रांकुरः पिकस्य मुखे ॥**
**अरुणवसनो वसंतो गौरसुवेषो रसालगतः ॥ १७३ ॥**

वसंत एषः गौरश्चासौ सुवेषः शोभनकल्पश्च ॥ अरुणवसनः ॥ केशगानि मौलिगतानि किंशुकानि पलाशपुष्पाणि यस्य सः ॥ पिकस्य कोकिलस्य मुखे चंच्वां प्रवेशित आरोपित आम्रस्य रसालवृक्षस्यां कुरः अभिनवाङ्कुरो येन सः । रसालगतो माकंदमूलवासी ॥ १७३ ॥

**मालामशोकचंपककमलानामुद्वहन्महाभूषः ॥**
**ललनांदोलितदोलालोलो हिंदोलको गौरः ॥ १७४ ॥**

हिंदोलकः गौरः महाभूषः अशोकचंपककमलानां मालां उद्वहन्बिभ्रन् ॥ ललनाभिः कामिनीभिः आंदोलिता युगपत् कराक्षिप्तायादोलाप्रेंखः तस्यां लोलः सतृष्णः दक्षिणो नायकः स्वस्वव्यातिरिक्तास्तु तस्यानुरागः काभिरपि न ज्ञात इत्यज्ञातार्थप्रत्ययेनापि ज्ञेयम् ॥ तं सूचितम् ॥ १७४ ॥

**कुटिलो ललितो ललितो विभातयातो विनीततां नटयन् ॥**
**निह्नुतपररतिचिन्हो गदति वधूं चाटु पटुः खिन्नाम् ॥ १७५ ॥**

ललितः सुंदरः कुटिलः गूढप्रियकृत् निन्हुतानि छादितानि पररतिचिन्हानि अन्यनारी संभोगलांछनानि नखक्षतादीनि येन सः । विनीततां अनौद्धत्यं टयन् बहिरनुकुर्वन् विभातयातः उषसि आगतः सन् पटुर्वाग्मी खिन्नां वधूं चटु प्रियं वाक्यं गदति ब्रूते ॥ अहमपीदमचोद्यं चोद्य इति तद्राजसूत्रे भाष्यकारं योगोज्ञापकोदत्त्यादिषु । अर्थग्रहणमिति॥कअटोह्यप्याह ॥ चोदे पृच्छार्थत्वाद्दुहि याचीत्यत्रार्थग्रहणात् द्विकर्मकत्वमिति ॥ तेन ब्रूह्यर्थस्य गदितेरपि द्वि-

कमकर्त्वम् ॥ तथाच भट्टिप्रयोगः—स्थातुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थमिति ॥ खंडिता नायिका ॥ शठो नायकः ॥ १७५ ॥

एषा माधुरवेषा विशेषपटुरकटुदेशभाषाभृत् ॥
स्वेशे मदनावेशं करोत्यलेशेन जैताश्रीः ॥ १७६ ॥

जैताश्री एषा स्वेशे स्वभर्तरि अलेशेन पूर्णतया मदनावेशं कामप्रादुर्भावं करोति ॥ कीदृक् माधुराः मधुरायां भवा लोकास्तेषामिव वेषो यस्याः सा ॥ विशेषपटुः सातिशयंप्रवीणा ॥ अकटुर्मंजुला या देशभाषा मधुराप्रदेशभाषा तां बिभर्ति पुष्णाति इति तद्भृतगीर्वाणवीणां प्रवीणापि तद्देषभाषा भाषिणीत्यर्थः ॥ १७६ ॥

दूर्वाभविभाविरहा सहालिखंती पटे पतिं रुदती ॥
स्नपितकुचा सितगल्ला स्थिरधंमिल्ला धनाश्रीः स्यात् ॥ १७७ ॥

धनाश्रीः धन्याशी स्यात् एवं भवेत् । तदेवाऽऽह ॥ दूर्वाभा हरिता समा विभा देहकांतिर्यस्याः सा ॥ विरहासहा । पतिवियोगमसहमाना ॥ अतएव पटे वस्त्रविशेषे पतिं लिखंती धातुरागैः आरब्धपतिरूपलेखना । रुदती स्नपितकुचा अश्रुपूरैराप्लावितपयोधरेत्यर्थः ॥ सितगल्ला विरहपांडुगंडस्थला ॥ स्थिरधम्मिल्ला अमोचितकेशपाशा ॥ प्रोषितपतिका नायिका ॥ १७७ ॥

डमरुत्रिशूलधारी पन्नगहारी सितोलसद्भसितः ॥
धृतशशिगंगोऽतिजटोऽजिनविकटो भैरवोऽसमदृक् ॥ १७८ ॥

भैरवः ॥ डमरुत्रिशूलधारी पन्नगहारी सर्पहारवान् सितः शुभ्रवर्णः लसत् ॥ अंगसंगेन विराजन् भसितं भस्म यस्मिन् सः ॥ धृतशशिगंगः भालचंद्रः शिरसि गंगाधरश्च । अतिजटः वहुजटः स्फूर्जितजटो वा ॥ अजिनं गजचर्म शार्दूलचर्म वा तदस्यास्तीति अजिनी स चासौ विकटः सुंदरो विशालोवा असमदृ-

क् त्रिलोचनः ॥ विकटः सुंदरे प्रोक्तो विशालविकरालयोरिति विश्वः ॥१७८॥

**तनुगौरी पौरविका यतवेणी मिलितकंचुकीबंधा ॥**
**दोलांदोलनलोला नीलनिचोला मधौ मुदिता ॥ १७९ ॥**

पौरविका तनुः कृशा चासौ गौरी च सा ॥ आयतवेणी आलंबया वेण्या सह मिलितः संयुक्तः कंचुकीबंधः कूर्पासकग्रंथिर्यस्याः सा पृष्ठे बद्धकंचुकी-कतया अतिनिगूढकुचेत्यर्थः ॥ मधौ वसंते मुदिता हृष्टा सती दोलांदोलनलो-ला । नीलनिचोला असित प्रवृद्धपटा ॥ १७९ ॥

**कलितविपंची विपिने लालितहरिणाऽरुणांबरा हरिणी ॥**
**धवलांगरागरचना मृदुवचना भूषिता तोडी ॥ १८० ॥**

तोडी विपिने वने कलितविपंची अंगीकृतवीणांगना ॥ अत्र लक्षणा ज्ञेया लालितहारिणा रंजितमृगा । अरुणांबरा ॥ हरिणीहरितवर्णा । धवला अंग रागरचना यस्याः सा ॥ भूषिता कृतमंडना ॥ मृदुवचना कांतमानेतुं दूतीं प्र-ति मंजुलोक्तिः ॥ हरिणी हरितायां स्यादिति विश्वः ॥ हरिणीतिवर्णादनुदात्ता-दिति वैकल्पिको ङीप् ॥ तकारस्य नकारश्च ॥ वासकसज्जा नायिका ॥१८०

**आयातनीलनिचोला करमालाजप्यमानपतिनामा ॥**
**विरहातुरोच्यगौरी तुरुष्कतोडी महावेणी ॥ १८१ ॥**

तुरुष्कतोडी उच्चा चासौ गौरवर्णा च । महावेणिः लंबवेणिका । आयत-नीलनिचोला विरहातुरा कांतवियोगपीडिता करमालया करगतमालया । जाप-मानं मुहुरावर्त्यमानं पतिनाम यया सा ॥ वेणिः प्रवेणीत्यमरः ॥ जप्यमिति पोरदुपधादिति यत् ॥ १८१ ॥

**नीलो घनांतरालोल्लसितः पीतांबरो वरो वीरः ॥**
**मृदुहसितोऽतिपिपासितचातकपोष्येषु मल्लारिः ॥ १८२ ॥**

मल्लार्यैवनीलोः वनांतराले मेघानामभ्यतर उल्लसीतमुल्लासनं यस्य सः पीतांबरो वरः श्रेष्ठः सुंदर इति यावत् ॥ वीरो वीररसप्रियो मृदुहसितः स्मेरमुखः । अतिपिपासिता अतितृषिता ये चातकाः तत्तेपीमेष्वाधिष्ठातदेवतात्वेन तेभ्यो जलदानेत्यर्थः ॥ मेघरागनामाऽयं लोके ॥ १८२ ॥

**नटमल्लारिरनीलो नृत्यन्कुतुकेन नर्तयञ्शिखिनः ॥**
**कलितकदंबो ललितो मिलितालिः स्वैरभात्सहजात् ॥ १८३ ॥**

नटमल्लारिरनीलशुभ्रवर्णः कुतुकेन कुतूहलेव नृत्यञ्शिखिनो मयूरानर्तयन् ॥ कलितकदंबो नीपमूले स्थितललितः सुंदरः सहजात्सौरभादनागंतुकदेहपरिमलान्मिलिता एकीभूता अलिनो भृंगा यस्मिन् सः । सौरभादिनि इगंताश्च लघुपूर्वादिति भावेऽण् ॥ १८३ ॥

**पलितकचाहितबर्हः सकुटजमालो धनुः शरौ कलयन् ॥**
**गोंडः किरातवेषो गैरिकलेखोचितोऽलिनिभः ॥ १८४ ॥**

गोंडः किरातवेषो भिल्लवेषः पलितकचेषु वार्धकशुभ्रेषु केशेष्वाहिताभ्यारोपितानि बर्हाणि मयूरपिच्छानि येन सः ॥ सकुटजमालः कुटजपुष्पमालासहितः । धनुः शरौ कलयन् । वामकरे धनु दक्षिणकरे शरं च धारयन् गैरकं धातुविशेषः ॥ तद्रेखाणामुचितः । गैरिकरेखाभवांगरागः ॥ अलिनिभो भृंगशामः ॥ गैरिकं कनके धाताविति विश्वतः ॥ १८४ ॥

**तरुणोऽरुणवसनयुगो हरपूजामंबुजस्रजा रचयन् ॥**
**कमलदृगुत्तमवेषो विधुमधुरः पूर्वगौडोयम् ॥ १८५ ॥**

पूर्वगौडोऽयं विधुमधुश्चंद्रमनोज्ञः । तरुणो युवा ॥ अरुणं रक्तं वस-

नयुगं यस्य सः । अंवुजस्त्रजा कमलमालया हरपूजां रचयन् । कमलदृक्पद्मनेत्रः । उत्तमवेषः ॥ १८५ ॥

मणिमयमुकुटो हारी विचित्रवासा लसन् गतावलसः ॥
अरुणः कृपाणपाणिर्देशीकारः सरोजाक्षः ॥ १८६ ॥

देशीकारोऽरुणो रक्तो मणिमयमुकुटो हारी हारवान् । विचित्रे नानावर्णे वसने यस्य सः ॥ लसन् दीप्यमानः । गतावलसो । मंथरगमनः । कृपाणपाणिः खड्गहस्तः सरोजाक्षः ॥ १८६ ॥

तरुणी वने सकरुणं गवेषयंती पतिं भृशं गौरी ॥
नीलांवरा वराटी सुरतरुकुसुमोल्लसत्सुषमा ॥ १८७ ॥

वराटी भृशं गौरी नीलांवरा तरुणी । वने सकरुणं दीनं यथा तथा पतिं गवेषयंती सुरतरुकुसुमैर्मंदरादिपुष्पैरुल्लसंती प्रादुर्भवंती सुषमा परमशोभा यस्याः सा । सुषमा परमा शोभेत्यमरः ॥ १८७ ॥

श्यामा चलधम्मिल्ला तन्वी तांबूलिनी सुकंचुकिका ॥
बहुलीलेयं वहुली लोलचैलांचला सुगतिः ॥ १८८ ॥

वहुलीयं श्यामा शामवर्णा । तन्वंगी कृशांगी । सुगतिः शोभनगमना । चलधम्मिल्ला गतिवशाच्चंचलकेशवेशा । लोलचैलांचला गतिवशादेव भूमिविलसद्वसनप्रांता । तांवूलिनी करे तांवूलवती ॥ सुशोभना कंचुकिकाऽल्पकंचुकी यस्याः सा वहुलीलाऽनेकविलासा ॥ कंचुकिकेत्यल्पे कः ॥ केण इति ह्रस्वः ॥ अभिसारिका नायिका ॥ वहुलीति पदांशयमकम् ॥ १८८ ॥

पीतांवरोऽसिततनुर्ललितालंकृतिरुपेतचापेषुः ॥

**सारंगो गरुडांकोंबुजकंबुगदारिधारिकरः ॥ १८९ ॥**

सारंगोऽसिततनुः श्यामकायः । पीतांबरो ललितालंकृतिः शोभनालंकारः । गरुडांकः सुपर्णसेवितः । अंबुजं पद्मं कंबुः शंखः । गदा कौमोदकी । अरं चक्रावयवः सोऽस्यास्तीति अरि चक्रं तद्धारिणः करा यस्य सः । उपेताः प्राप्ताश्चापेषवो येन सः ॥ तत्र अंसे चापं तूणीरे शरा इत्यर्थः ॥ शंखः स्यात्कंबुरस्त्रियामित्यमरः । अरं शीघ्रे च चक्रांग इति विश्वः ॥ १८९ ॥

**इंदीवरतनुरंचलपीतदुकूलो मणिस्फुरन्मुकुटः ॥**
**नटनारायण उच्चैः कुंडलललितो मुदा नृत्येत् ॥ १९० ॥**

**नटनारायणो** मुदा हर्षेणोच्चैरतितरां नृत्येत् ॥ कीदृगिंदीवरतनुर्नीलोत्पलश्यामकायः । अंचंती शोभमाने पीतदुकूले यस्य सः । मणिभिः स्फुरन्भासमानो मुकुटो यस्य सः ॥ कुंडलललितः ॥ १९० ॥

**भासुरतनुरनुगतसुरतरुसुनानूनसौरभा सुमुखी ॥**
**देवकृतिरतुलभूषा मणिमयसिंहासनासीना ॥ १९१ ॥**

देवकृतिर्देवक्रीर्भासुरतनुर्दीप्तदेहा ॥ अनुगतानि सुरतरुसूनानि देवद्रुमपुष्पाणि यया सा ॥ अनूनं सकलावयवव्यापि सौरभं सहजसौगंध्यं यस्याः सा । सुमुखी स्मितवदना । अतुलभूषणा मणिमयसिंहासनासीना ॥ सूनं प्रसवपुष्पयोरिति विश्वः ॥ १९१ ॥

**चित्रांबराऽतिगौरी मेचककंचुकिकयाऽतिगूढकुचा ॥**
**शोणरदा विधुवदना मदनार्ता याति सौराष्ट्री ॥ १९२ ॥**

सौराष्ट्री मदनार्ता कामपीडिता सती याति कांतामिति शेषः ॥ कीदृगति-

गौरी चित्रांबरा नानावर्णवसना । मेचककंचुकिकया नीलकंचुक्याऽतिगूढकुचा ॥ पृष्ठगतकंचुकीग्रंथिरित्यर्थः । शोणरदाऽरुणदंता । विधुवदना चंद्रवदना । कालश्यामलमेचका इत्यमरः ॥ कंचुकिकयेति स्वार्थे कन् । अभिसारिका नायिका ॥ १९२ ॥

**क्षीरोदभासिवासाः सहजसुहासा प्रलंबबाहुलता ॥**
**करधृतसाहिच्छत्रा गौडी गौरी सरोजाक्षी ॥ १९३ ॥**

गौडी गौरी सरोजाक्षी क्षीरोदभासिवासा दुग्धसमुद्रवत् श्वेतवसना ॥ सहजसुहासा । प्रलंबबाहुल तादीर्घतनुभुजा । करे धृतं साहिसर्पयुक्तं छत्रं यया सा ॥ १९३ ॥

**श्रुतिकृतरसालवल्लरिररुणांबरगौरतनुरभीष्टवना ॥**
**पिककलगलरवचित्ता चित्तहरा कीर्तिता चैत्ती ॥ १९४ ॥**

चैत्ती श्रुतिकृतरसालवल्लरिः कर्णस्थापिताम्रमंजरिः । अरुणांबरा चासौ गौरतनुश्च सा । अभीष्टवना वमनासे रुचिः । पिककलगलरवचित्ता कोकिलवन्मंजुलकंठध्वानिख्याता चित्तहरा कांतस्वांतहारिणी ॥ १९४ ॥

**यावकयुक्करचरणा बह्वाभरणा कृतेशहृद्धरणा ॥**
**दूर्वाभतनुरखर्वा चार्वी बहुगर्विता पूर्वी ॥ १९५ ॥**

पूर्वी दूर्वाभतनुर्नीलदेहा । यावकयुगलक्तकुयुक्तं करचरणं यस्याः सा । बह्वाभरणा कृतं गुणैर्विहृतमीशहृदः पतिमनसः हरणं यया सा ॥ अखर्वा उच्चा । चार्वी सुंदरी । बहुगर्विता अतिसौंदर्यगर्विता । चार्वीति वोतो गुणवचनादिति पक्षे ङीप् ॥ १९५ ॥

कदलीमूलासीना पीनकुचाऽधीननायका तन्वी ॥
कनकनिभा शुभहारा त्रावणिका वर्ण्यवेणीका ॥ १९६ ॥

त्रावणिका त्रावणी । कनकनिभा सुवर्णगौरी । कदलीमूलासीना रंभांतिकोपविष्टा तन्वी कृशांगी ॥ पीनकुचा शुभहारा । वर्ण्यवेणिका वर्णनीयवेणिः ॥ अधीननायका स्वाधीनपतिका ॥ मूलमाद्ये शिफायां स्यात् भेविकुंजेतिकेपिचेति विश्वः ॥ वेणीकेति न नकपीति ह्स्वाभः ॥ १९६ ॥

पीतांशुका सुकेशी शितिः स्मरंती पतिं भयाकुलदृक् ॥
पिकनादेनविदूना कामोदी कानने रुदती ॥ १९७ ॥

कामोदी शितिर्मेचका ॥ सुकेशी । पिकनादेन विदूना कोकिलालापेन परितप्ता ॥ भयाकुलदृगन्यमपि विरहिणी भयहेतुमुत्प्रेक्ष्यमाणा सति चंचलनेत्राऽअत एव कानने रुदती अश्रुं मुंचती ॥ पतिं देशांतरगतमिति शेषः । स्मरंती चिंतयंती ॥ पतिमिति कर्मणः शेषत्वेऽविवंक्षितत्वात् ॥ अधीगर्वेति कर्मणी षष्ठीन् ॥ प्रोषितभर्तृकेयम् ॥ १९७ ॥

खेटककृपाणपाणिः प्रतर्जयन्वैरिणो रणेऽरुणदृक् ॥
हरितालाभो हारी हयचारी धीरधीर्नाटः ॥ १९८ ॥

नाटः खेटककृपाणौ चर्मखड्गौ पाण्योर्यस्य सः । रणे युधि हयचारी अश्वगामीसन् वैरिणः रिपून् प्रतर्जयन् भीषयमाणः ॥ अरुणदृक् कोपताम्राक्षः ॥ हरितालाभः हरितालकांतिः । हारी मुक्ताहारवान् । धीरधी रणस्थिरः ॥ १९८ ॥

गौरश्यामाऽऽभेरी विनीलचोला सविद्रुमालिगला ॥

**ताटंकांचितकर्णा मृदुतनुवाणिः सुवेणीभृत् ॥ १९९ ॥**

आभेरी गौरश्यामा ॥ विनीलचौला कृष्णवसना ॥ सविद्रुमालिः प्रवालमालासहितो गलः कंठो यस्याः सा । ताटंके चक्राकारकर्णभूषणे ताभ्यामंचितौ रुचिरौ कर्णौ यस्याः सा ॥ मृद्व्यौ कोमले तनुवाण्यौ कायगिरौ यस्याः सा । सुवेणीभृत् शोभनवेणीधारिणी ॥ वाणीरिति समासांतविधेरनित्यत्वात्कब्भावः ॥ गोस्त्रियोरिति ह्रस्वत्वं च ॥ १९९ ॥

**सच्छत्रचामरोऽच्छस्तांबूली मौलिरत्नमालावान् ॥**
**कल्याणः सितवासा राजा सिंहासनासीनः ॥ २०० ॥**

कल्याणः राजा नृपवेषः अच्छः अवदातः स्फटिकसित इति यावत् ॥ सच्छत्रचामरः ॥ तांबूली ॥ मौलिमुकुटः रत्नमाला च ते स्तः अस्येति तद्वान् सितवासाः सिंहासनासीनः ॥ २०० ॥

**कनकातपत्रमूले लोलदुकूले गजाश्रयो राजन् ॥**
**श्रीरागोऽखिलभोगो नीरजराजिं भजन् मौलौ ॥ २०१ ॥**

श्रीरागः गजाश्रयः गजारूढः सन् लोलं चलद्दुकूलं दीर्घशाकं यस्मिन् तस्मिन् कनकातपत्रमूले सूवर्णछत्रस्यांतिके राजत् ॥ अखिलभोगः अष्टभोगाढ्यः ॥ नीरजराजिं कमलमालां मौलौ भजनवहत् ॥ २०१ ॥

**कांताचुंवितलपनश्चलमौलिः किमपि कुंडली शुकभाः ॥**
**वर्तनशालाशाली मालाभृन्मालवो मत्तः ॥ २०२ ॥**

मालवः मालवगौडः शुकभाः कीरवन्नीलवर्णः ॥ यद्वा शुकेन भासते इति

शुकभाः कीरधारी ॥ कांताचुंबितलपनः स्त्रिया चुंबितमुखः सन् नर्तनशालां संगीतं शीलयत्यधितिष्ठतीति तच्छीली नर्तनमिह संगीतोपलक्षकम् ॥ मत्तः मधुपानोन्मत्तः अत एव किमपि किंचित् चलमौलिः चंचलकिरीटः ॥ कुंडली कुंडलवान् ॥ मालाभृन्मालीवक्त्रास्येलपनमित्यर्थः ॥ २०२ ॥

**कुंकुमकुसुंभजांभः कणकीर्णसितांबरः परंसुरभिः ॥**
**मृगमदतिलकी ललितो मालातांबूलवान् गौडः ॥ २०३ ॥**

गौडः शुद्धगौडः ॥ कुंकुमं काश्मीरं कुसुंभं महारजनं च तज्जं यदंभः द्रवः तत्कणैः कीर्णानि सिक्तानि सितांबराणि यस्य सः ॥ परं सातिशयं । सुरभिः सहजसुगंधिः मृगमदतिलकी ललितः सुंदरः मालातांबूलवान् ॥ २०३ ॥

**सासिगजदंतपाणिर्नीलगलो मीनभूषितः कर्णे ॥**
**श्रृंगारवीरवेषी कर्णाटो योषितामिष्टः ॥ २०४ ॥**

कर्णाटः सासिगजदंतौ खड्गगजदंतौ सहितौ पाणी दक्षिणवामौ क्रमेण-यस्य सः ॥ नीलगलः कंठे नीलः ॥ कर्णे मीनभूषितः ॥ अवतंसीकृतमत्स्यः ॥ श्रृंगारवीरवेषी ॥ एतदुभयरसप्रियः ॥ योषितां स्त्रीणां इष्टः वल्लभः ॥२०४॥

**कुटजस्रजा विराजन् कुंतीकृतकेतके स्फुरन्मकरः ॥**
**अड्डानो घनवर्णो रमते रतिसंगरे नितराम् ॥ २०५ ॥**

अड्डाणः रतिसंगरे संभोगसंग्रामे नितरां रमते ॥ कीदृक् घनवर्णः ॥ मेघश्यामः ॥ कुटजस्रजा विराजन् ॥ कुंतीकृतकेतके प्रासाख्यायुधीकृते केतकीपुष्पे स्फुरन्मकरः राजन्मीनचिन्हः ॥ अयं मेघरागस्य कर्णाटस्य च मित्रम् ॥ २०५ ॥

हारी गौरोऽरुणदृक् हिमसितवसनोऽच्छपाटलोष्णीषः ॥
छायानाटपराख्यः सुवर्णनाटो भटोरसिकः ॥ २०६ ॥

सुवर्णनाटः॥ सम्प्रसिद्धः कीदृक् ॥ गौरः हारी अरुणदृक् । ताम्रनयनः हिमसितवसनः तुषारशुभ्रवस्त्रः ॥ अच्छं तनु पाटलं श्वेतरक्तं च उष्णीषं शिरोवेष्टनं यस्य सः ॥ भटः शूरः रसिकः शृंगारी । छायानाट इति परा द्वितीया आख्या नाम यस्य सः ॥ २०६ ॥

रसिको युवा सहासोऽरुणवसनो दंडकंदुकी कुतुकी ॥
तांबूलरुची रुचिरो गौरो वीरस्तु हंमीरः ॥ २०७ ॥

हंमीरस्तु गौरः । वीरः रसिकः युवा तरुणः॥ सहासः अरुणवसनः ॥ कुतुकी कौतुकवान् ॥ अत एव दंडः कंदुकप्रक्षेपिका यष्टिः॥ कंदुको वर्तुलं क्रीडोपकरणं अस्यास्तीति दंडकंदुकी ॥ तांबूलरुचिः तांबूलप्रियः ॥ रुचिरः सुंदरः ॥ २०७ ॥

जटिलोहियोगपट्टः सविधुशकलमौलिरुल्लसद्भसितः ॥
गंगाधरस्तपस्वी ध्यानरतोऽतीव केदारः ॥ २०८ ॥

केदारः जटिलः जटावान् । अहिः सर्प एव योगपट्टः सविधकावंधो यस्य सः । सविधुशकलः चंद्रकलासहितः मौलिर्यस्य सः ॥ उल्लसद्भसितः अंगे राजद्भस्म ॥ गंगाधरः तपस्वी अतीवध्यानरतः ॥ आत्मानुसंधानपरः॥ २०८

विधुकरगौरः सुरभिः सुमनःकृतभूषणांवरेषुधनुः ॥
विरहिजनमनोमोही विहंगलः कीरवाही सः ॥ २०९ ॥

विहंगलः स प्रसिद्धः । कीदृक् विधुकरगौरः चंद्रकिरणवत् सितः ॥ सु-

राभिः सहजसुगंधिः ॥ सुमनोभिः पुष्पैः कृतानि रचितानि भूषणानि अंब-राणि इषवो धनुश्च येन सः ॥ विरहिजनमनोमोही ॥ कीरवाही करे कीरधारी ॥ २०९ ॥

तन्वीरसालतलगा कलगा ना सस्मिता प्रति स्वपतिं ॥
मृगदृक्करगतकमला मालाश्रीर्मालयोल्लसिता ॥ २१० ॥

मालाश्रीः तन्वी रसालतलगा आम्रमूलं गता सती कलगाना ॥ मंजुलगा-यना ॥ स्वपतिं निजकांतं प्रति सस्मिता भावाभिव्यंजकमंदहसितयुता ॥ मृगदृ-क् हरिणाक्षी ॥ करगतं हस्ते धृतं कमलं यया सा ॥ मालया कुसुमस्रजा उल्लसिता ॥ २१० ॥

धृतनीराजनपात्रा सुंदरगात्राऽधिमंगला धवला ॥
पीतांगरागवसना चलरशना सुदशना गौरी ॥ २११ ॥

धवला गौरी ॥ सुंदरगात्रा ॥ सुदशना शोभनदंता ॥ अधि अतिशयितं मंगलं यया सा ॥ धृतं नीराजनपात्रं दीपाक्षतादियुक्तं अमत्रकं यया सा ॥ पीते हरिद्राभे अंगरागवसने यस्याः सा ॥ चला गतिवशाच्चंचला रशना मेखला यस्याः सा ॥ २११ ॥

श्यामा कामाक्रांता कांतवियोगासहा मुखारीयम् ॥
मणिमयसुकुचावरणा वीणापाणिः प्रवीणोच्चैः ॥ २१२ ॥

मुखारीयं श्यामा श्यामवर्णा । कामाक्रांता कांतवियोगासहा ॥ भर्तृवि-रहमसहमाना ॥ मणिमये रत्नखचिते सुकुचावरणे शोभने कुचयोरेव उष्णी-षाकारे आच्छादने यस्याः सा ॥ वीणायुक्तः पाणिर्यस्याः सा वीणापाणिः ॥

उच्चैः सातिशयं प्रवीणा कुशला ॥ वीणापाणिरिति शाकपार्थिवादिः कर्णाट-वेषजेषेणेयम् ॥ २१२ ॥

कांचनविभाऽतिभासुरभूषा नीलांशुकाऽधिकं रम्या ॥
रामकृतिरणुवदंती सुदती दयितेंतिके याते ॥ २१३ ॥

रामकृतिः रामक्रीः ॥ कांचनाविभा सुवर्णकांतिः ॥ अतिभासुरभूषा अतिदीपनशीलभूषणा ॥ निलांशुका ॥ अधिकंरम्या सुंदरी ॥ दयिते भर्तरि अंतिकं याते समीपमुपगते सति अणु सूक्ष्मं मंदमिति यावत् ॥ वदंती भाषमाणा ॥ सुदती तारुण्यावेशेन शोभनरदना ॥ सुदतीति वयसि द्योत्ये वयसाति दतादेशः ॥ २१३ ॥

गोपालवेष एषः क्वणयन्वेणुं सदा मुदा क्रीडन् ॥
चित्रांगरागभावः पावकरागोऽसितो ललितः ॥ २१४ ॥

पावकरागः । पावकनामारागः एषः गोपालवेषः । वेणुं वंशं क्वणयन् सन् मुदा हर्षेण सदा सततं क्रीडन् रममाणः चित्रे नानावर्णे अंगरागे भावः प्रीतिर्यस्य सः ॥ असितः श्यामः ललितः सुंदरः ॥ २१४ ॥

उच्चतनुस्तनुरतनुर्जघने शोणांशुका त्रिशूलांका ॥
गौरी करिगतिराभिमतयुद्धा सैंधव्यतिक्रुद्धा ॥ २१५ ॥

सैंधवी गौरी ॥ उच्चतनुर्दीर्घदेहा । तनुः कृशांगी । जघने अतनु ॥ विशाला ॥ शोणां शुका रत्नवसना ॥ त्रिशुलांका करेत्रिशूलचिन्हा ॥ करिगतिः । गजमंदगमना ॥ अतियुद्धा ॥ अभिमतं प्रियं युद्धं यस्याः सा ॥२१५॥

चलकदलीदलमौलिर्मलयाचलगा कलक्वणन्मुरलिः ॥

आसावरी सकरुणा वर्हाली शालिनी नीला ॥ २१६ ॥

आसावरी ॥ नीला नीलवर्णा । सकरुणा करुणारसयुता ॥ चलं वायुवशाच्चंचलं कदलीदलं रंभापत्रं यत्र तादृक् मौलिर्यस्याः सा ॥ मलयाचलगा मलयाद्रिगता ॥ कलं मंजुलं क्वणंती मुरली वंशविशेषो यस्याः सा बर्हालीशालिनी ॥ कटौ मयूरपत्रपरिवीता ॥ २१६ ॥

सिंहासनोपवेशी भूषाभिर्भासितः सितः कुमुदी ॥
धवलांबरः सुरनुतः शृंगारी देवगांधारः ॥ २१७ ॥

देवगांधारः धवलांबरः । कुमुदी शुभ्रकमलवान् ॥ भूषाभिः भासितः ॥ सिंहासनोपवेशी ॥ सुरनुतः देवैः स्तुतः ॥ शृंगारी शृंगाररसवान् ॥ २१७ ॥

इंदुमुखी कनकाभा दीर्घा लंबालकाऽतुला चलदृक् ॥
अरुणांबरा नृपवरांस्त्वरयंती मारवी समिते ॥ २१८ ॥

मारवी कनकाभा ॥ इंदुमुखी युद्धहर्षाच्चंद्रवदना ॥ दीर्घा उच्चदेहा ॥ लंबालका प्रलंबवेणिः ॥ अरुणांबरा ॥ अतुला रूपेण निरूपमा ॥ चलदृक् ॥ समिते संग्रामे परस्परं संग्रामं कारयितुं नृपवरान् राजश्रेष्ठान् त्वरयंती त्वरया प्रेरयंति ॥ समित्याजिसमिद्युधं इत्यमरः ॥ समित् शब्दात् क्रियार्थोपिपदस्येति चतुर्थी ॥ २१८ ॥

परज इषुधनुर्धारी हारी गौरस्तनुस्तनूदीर्घः ॥
मिथआहततालवधूशालीस्तवनेन शालीनः ॥ २१९ ॥

परजः गौरः ॥ तनुः कृशांगाः ॥ तनुदीर्घः देहेन उच्चः ॥ हारी हारवान् ॥ इषुधनुर्धारी दक्षिणे करे बाणं वामकरे च चापं बिभ्राणः मिथ आहत-

तालः अन्योन्यं वादिततालाः याः वध्वः योषितः ताभिः शालते इति तच्छा-
ली ॥ स्तवनेन वंदीजनकृतस्तुत्या शालीनोऽधृष्टः अविकत्थन इति यावत् ॥
स्यादधृष्टस्तु शालीन इत्यमरः ॥ २१९ ॥

**रागेषु देवतात्वे नाशंक्या क्वपि देशजा रीतिः ॥**
**स्पृशभाषावेषविशेषास्तेषां देशाधिदेवत्यात् ॥ २२० ॥**

नन्वेवं प्रतिपादितरूपाणां रागाणां देवतात्वं चेत्तर्हि क्वचक्वचनदृश्यमानो
वेषभागादिविषयस्तद्देशसंप्रदायो न घटत इत्याह—**रागेष्विति** ॥ रागेषु दे-
वतात्वे सत्यपीति शेषः । क्वापिकेषुचित् जैताश्र्चादिरागेषु देशजाततद्देशजा-
ता रीतिः संप्रदायः न आशंक्यो न प्रश्नार्हः ॥ कद्दिशी भाषा देशजवाणी ॥
वेषो भूषणांबरविधानादिविशेषश्च तौ स्पृशती भाषावेषविषयेत्यर्थः ॥ हेतु-
माह—**तेषामिति** ॥ तेषां केषांचिद्रागाणां देशाधिदेवत्यात् ॥ देशानां कति-
पयजनपदविशेषाणां यत् अधिदेवत्यं अधिष्टानृदेवताभावस्तस्मात् ॥ यस्य
देशस्य या अधिष्ठात्री देवता तस्यास्तद्देशभाषणादिदेवतात्वेऽपि ध्येयमेवेत्य-
र्थः ॥ स्पृशतीत्यनेन देशवेषभाषयोः स्पर्शनमात्रं न तु तात्त्विकोंगीकार इति
सूचितम् ॥ स्पृशतीति आछिनद्योरिति पक्षे नुमभावः ॥ २२० ॥

**इति केषांचित्तेषां कतिचन रूपाणि तानि चैतानि ॥**
**नादात्मान्यखिलानि ब्रह्मगुणवदगणनीयानि ॥ २२१ ॥**

अथ पूर्वोक्तद्विविधरूपाणि निगमयन् सकलनादमयरुपानिरूपणे असाम-
र्थ्यतामाह—**इति केषांचिदिति** ॥ केषांचित्तेषां रागाणां कतिचन कतिपयानि
नादमयानि रूपाणि चपरं शतानि देवतामयरूपाणि इति एवं प्रदर्शितानीति
शेषः ॥ ननु एकपंचाशतोपि रागाणामेकैकदेवतामयरूपाणीव सकलान्यपि
नादमयरूपाणि वाकिं प्रदर्शितानीत्यत्र हेतुभूतं वाक्यमाह—**नादात्मानीति** ॥

नादमयानि अखिलानि अगणनीयानि ॥ देश्यां देशे देशे तेषां रुच्या उत्पन्नत्वादुत्पद्यमानत्वादुत्पस्यमानत्वाच्च अनंतेत्यर्थः ॥ किंवत् यथा परमात्मनो गुणाः विष्णोर्नुकं वीर्याणि प्रवोचमित्यादिश्रुतेः पृथ्वीरजोवत् अगणनीयत्वात् अप्रदर्शनीयास्तद्वदित्यर्थः ॥ २२१ ॥

**बालिश बोधोपायो मया कृतो दक्षपूर्वपक्षेयम् ॥**
**युक्त्वा निजया सुजनैस्तथाऽपि सिद्धांततां नेयः ॥ २२२ ॥**

ग्रंथांते स्वकृतिस्थापनाय सज्जनान्प्रार्थयते—**बालिशेति** ॥ मया कृतः अयं ग्रंथरूपः बालिशबोधाय मंदधीबोधनप्रकारः ॥ यद्यपि दक्षपूर्वपक्षः प्रचंडमतिपंडितखंडनार्हः तथापि सुजनैः निजया युक्त्या स्वबुद्धिविभवेन सिद्धांततां अखंडनीयत्वं नेयः प्रापणीयः । यद्यपीत्यर्थात् परगुणपरमाणून् पर्वतीकृत्य नित्यं निजत्धदि विकसंतः संति संत इति सतां लक्षणात् ॥ मूर्खवैधे बालिशा इत्यमरः ॥ २२२ ॥

**स्वकृतिलताया बहुमतमूलाया बालवित्प्रवालायाः ॥**
**गुणितोषणकुसुमायाः सुकृतफलमिहार्प्युमारमणे ॥ २२३ ॥**

अथ ग्रंथकृत् तत्कंणजनित सुकृतं शिवायार्पितवानहमित्याह—**स्वकृतिलताय इति** ॥ रागविबोधाख्यनिजकृतिरेव लता तस्याः सुकृतमेव फलं सत्यं इहबुध्या संनिधापिते उमारमणे आर्पि अर्पितं ॥ मयेति शेषः ॥ यत्करोषि यदश्नासीत्यादिकभगवदुक्तेः ईश्वरे तदर्पणं युक्तं ॥ कीदृश्याः बहुमतान्येव मूलं बुध्नो यस्याः तस्याः बालानांवित् ज्ञापनं व्युत्पादनमितियावत् ॥ तदेव प्रवालो बालपल्लवो यस्यास्तस्याः गुणितोषणं गुणवज्जनानामाल्हादनं त-

देव कुसुमं यस्यावर्तस्तस्याः मूलं बुध्नोंघ्रिनामकः । वृक्षादीनां फलं सस्य-मितिचामरः ॥ वित् ॥ इति अंतर्भावितण्यर्थात् वेत्तेर्भावेक्विप् ॥ तोषणमिति-ण्यंतात् ल्युद्रेतिभावे ल्युट् ॥ आर्पि इति अर्पयतेः कर्मणि लुङ् ॥ **स्वकृति-लतापाइति** । बहुमतबालवित् गुणितोषणसुकृतरूपैः अध्याहार्यैः समस्तैरवयवैः सहितस्य स्वकृतिरूपस्य उपसर्जनीभूतोपमेयस्य लतारूपस्य च अनुपसर्जनोप-मानस्य सति समासे परस्परगुणसाम्येन अभेदकापकात् सहायविषयं समस्त-विषयं सामात्यरूपकमलंकारः ॥ पंच गुणानां साम्ये सत्युपमानोपमेययोर-भिदा इत्याद्यार्याभिः रुद्रटकृतल्लक्षणात् ॥ तत्रत्यमुदाहरणमेतज्जजातीयं य-था ॥ विकासितताराकुमुदोगगनसरस्समलचंद्रिका सलिले ॥ विलसति शशि-कलहंसः प्रावृड्विपदुपगमे सद्यइति ॥ २२३ ॥

**सकलकलेत्युपनामकसोमकविहितेऽल्पबुद्धीनाम् ॥**
**पंचम इति रूपाणां रागविबोधे विवेकोऽयम् ॥ २२४ ॥**

**सकलकलेति** ॥ रूपाणां विवेकः । द्विविधरूपप्रतिपादकः इति पंचमोवि-वेकः ॥ शिष्टं स्पष्टम् ॥ २२४ ॥

**कुदहनतिथिगणितशके सौम्याब्दस्येषमासि शुचिपक्षे ॥**
**सोमेऽग्नितिथौ रविभेऽकरोदमुं मौद्गलिः सोमः ॥ २२५ ॥**

ग्रंथकरणकालमाह–**कुदहनेति** ॥ कुः पृथ्वी । दहनाः वह्नयः । तिथयश्च तद्गणितशके १५३१ ॥ सौम्याब्दस्य सौम्यसंवत्सरस्य इषेमासि आश्वि-नमासि शुचिपक्षे शुक्लपक्षे सोमे सोमवारे अग्नितिथौ वन्हिदैवततिथौ प्रति-पदि रविभे हस्तनक्षत्रे अमुं मौद्गलिः मुद्गलस्यापत्यं सोमः अकरोत् । स्यादा-श्विन इषोपीत्यमरः ॥ मौद्गलिरिति अत इञ् ॥ इषमासि इति पद्दन्नोमास्निति

अनंगाधिकारेपि तदस्यापिमास्आदेशः ॥ शिलादोषणीकुद्दोषणी इतिभाष्योक्तेस्तदंतविधौ सामान्यज्ञापकत्वात् ॥ तथाच प्रयोगः ॥ अशिथिलमृजुबंधव्याप्टतैकैकदोष्णोरिति ॥ अनादेशोवा मासशब्दः । पदादीनां पृथक्शब्दत्वात् । स्वांतं त्हन्मानसं मन इत्यमरोक्तित्वात् ॥ २२९ ॥

सकलकलेत्युपनामकमुद्गलसूरिसुतसोमनाथेन ॥
रागविबोधविवेकः पंचम एवं मनाग्विवृतः ॥ ९ ॥

## समाप्तोऽयं रागविबोधाख्यो ग्रंथः ।



